अथ तामुपारूढगर्भामालोक्य, हर्षभरमन्थरेण मनसा प्रस्तुतपरिहासो राजा 'देवि, शुकनासः पृच्छति—यदाह कुलवर्धना किमपि, तत्किं तथैव' इत्युवाच । अथान्यक्तस्मितच्छुरितकपोलाधरलोचना लज्जया विलासवती तत्क्षणमधोमुखी तस्थौ ॥

ततः क्रमेण यथासमीहितगर्भदोहदसंपादनप्रमुदिता, पूर्णे प्रसवसमये, पुण्येऽहनि, अनवरतगलन्नाडिकाकलितकालकलैर्बहिरागृहीतच्छायैर्गणकैर्गृहीते लग्ने, प्रशस्तायां वेलायाम्, सकललोकहृदयानन्दकारिणं विलासवती सुतमसूत ॥

तस्मिञ्जाते, सरभसमितस्ततः प्रधावितस्य परिजनस्य चरणशतसंक्षोभचलितक्षितितलः, विस्फार्यमाणान्तःपुरजनाभरणझंकारमनोहरः, पूर्णपात्राहरणविलुप्यमानवसनभूषणः, राजकुले दिष्टवृद्धिसंभ्रमोऽतिमहानभूत् । अनन्तरं च मङ्गलपटहपटुरवसंवर्धितेन अनेकजनसहस्रकलकलबहुलेन त्रिभुवनमापूरयता उत्सवकोलाहलेन सान्तःपुराः सप्रकृतयः सराजलोकाः सबालवृद्धा ननृतुरागोपालमुन्मत्ता इव हर्षनिर्भराः प्रजाः ॥

पार्थिवस्तु तनयाननदर्शनोत्सवहृतहृदयोऽपि, दिवसवशेन मौहूर्तिकगणोपदिष्टे प्रशस्ते मुहूर्ते, निवारितनिखिलपरिजनः, शुकनासद्वितीयः, मणिमयमङ्गलकलशयुगलाशून्येन संनिहितकनकमयहलमुसलयुगेन वन्दनमालान्तरालघटितघण्टागणेन द्वारदेशेन विराजमानम्, उभयतश्च द्वारपक्षकयोर्मर्यादानिपुणेन हरिद्राद्रवविच्छुरणपरिपिञ्जराम्बरधारिणीं भगवतीं षष्ठीदेवीं कुर्वता विन्य-

स्तालक्तकपटलपाटलमध्यमभागौ सूर्याचन्द्रमसावाबध्नता चन्दनजलधवलितेषु भित्तिशिखरभागेषु पञ्चरागविचित्रचेलचीरकलापचिह्नामापीतपिष्टपङ्काङ्कितां वर्धमानपरम्परामन्यानि च प्रसवगृहमण्डनमङ्गलानि संपादयता पुरन्ध्रिवर्गेण समधिष्ठितम्, उपद्वारसंयतविविधगन्धकुसुममालालंकृतजरच्छागम्, अध्ययनमुखरद्विजगणविप्रकीर्यमाणशान्त्युदकलवम्, अनेकवृद्धाङ्गनारब्धसूतिकामङ्गलगीतिकामनोहरम्, अविच्छिन्नपठ्यमाननारायणनामसहस्रम्, सूतिकागृहमपश्यत्। अम्भः पावकं च स्पृष्ट्वा विवेश ॥

प्रविश्य च प्रसवपरिक्षामपाण्डुमूर्तेरुत्सङ्गगतं विलासवत्याः, स्वप्रभासमुदयोपहतगर्भगृहप्रदीपप्रभम्, अपरित्यक्तगर्भरागत्वादुदयपरिपाटलमण्डलमिव सवितारम्, अपरसंन्ध्यालोहितबिम्बमिव चन्द्रमसम्, विद्रुमकिसलयदलैरिव बालातपच्छेदैरिव पद्मरागरश्मिभिरिव रचितावयवम्, उद्भासमानैः सहजभूषणैरिव महापुरुषलक्षणैरुपेतम्, आह्लादहेतुमात्मजं ददर्श। विगतनिमेषनिश्चलपक्ष्मणा चक्षुषा पिबन्निव मनोरथसहस्रप्राप्तदर्शनं सस्पृहमीक्षमाणस्तनयाननं मुमुदे। कृतकृत्यं चात्मानं मेने। समृद्धमनोरथः शुकनासस्तु शनैः शनैरङ्गप्रत्यङ्गान्यस्य निरूपयन्, प्रीतिविस्तारितलोचनो भूमिपालमवादीत्—"देव, पश्य पश्य—अस्य कुमारस्य गर्भसंपीडनवशादपरिस्फुटावयवशोभस्यापि माहात्म्यमाविर्भावयन्ति चक्रवर्तिचिह्नानि। तथा हि—अस्य संध्यांशुरक्तबालशशिकलाकारे ललाटपट्टे नलिननालभङ्गतन्तुतन्वीयमूर्णा परिस्फुरति। रक्तोत्पलकलिकालोहिततलौ भगवतो विष्टरश्रवस

इव शङ्खचक्रचिह्नौ प्रशस्तलेखालाञ्छितौ करौ । एष च दुन्दुभेरिवातिगम्भीरः स्वरयोगोऽस्य रुदतः श्रूयते" इति ॥

एवं कथयत्येव तस्मिन्, ससंभ्रमापसृतेन राजलोकेन दत्तमार्गः, त्वरितगतिरागत्य, मङ्गलनामा पुरुषः पादयोः प्रणम्य, राजानं व्यजिज्ञपत्—"देव, दिष्ट्या वर्धसे । प्रतिहतास्ते शत्रवः । चिरं जीव । जय च पृथिवीम् । त्वत्प्रसादादत्रभवतः शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां मनोरमाभिधानायां तनयो जातः । श्रुत्वा देवः प्रमाणम्" इति ॥

अथ नृपतिरमृतवृष्टिप्रतिममाकर्ण्य तद्वचनं प्रत्यवदत्—'अहो कल्याणपरंपरा । सत्योऽयं जनप्रवादः—यद्विपद्विपदम्, संपत्संपदमनुबध्नातीति' इत्यभिधाय प्रीतिविकसितमुखः सरभसमालिङ्ग्य विहसन् स्वयमेव शुकनासस्योत्तरीयं पूर्णपात्रं जहार । उत्थाय च तथैव तेन चारणगणेन विविधमुखवाद्यकृतकोलाहलेन पठता गायता चानुगम्यमानः, शुकनासभवनं गत्वा द्विगुणतरमुत्सवमकारयत् ॥

अतिक्रान्ते च षष्ठीजागरे, प्राप्ते दशमेऽहनि, पुण्ये मुहूर्ते, गाः सुवर्णं च कोटिशो ब्राह्मणसात्कृत्वा, "मातुरस्य मया परिपूर्णमण्डलश्चन्द्रः स्वप्ने मुखकमलमाविशन्दृष्टः" इति स्वप्नानुरूपमेव राजा स्वसूनोः चन्द्रापीड इति नाम चकार । अपरेद्युः शुकनासोऽपि कृत्वा ब्राह्मणोचिताः सकलाः क्रियाः, राजानुमतमात्मजस्य विप्रजनोचितं वैशम्पायन इति नाम चक्रे । क्रमेण कृतचूडाकरणादिबालक्रियाकलापस्य शैशवमतिचक्राम चन्द्रापीडस्य ॥

तारापीडः क्रीडाव्यासङ्गविघातार्थं बहिर्नगरादनुसिप्रम् अर्धक्रोशमात्रायामम्, अतिमहता तुहिनगिरिशिखरमालानुकारिणा सुधाधवलेन प्राकारमण्डलेन परिवृतम्, अधःकल्पितव्यायामशालं विद्यामन्दिरमकारयत्। सर्वविद्याचार्याणां च संग्रहे प्रयत्नमतिमहान्तमन्वतिष्ठत् ॥

तत्रस्थं च तं केसरिकिशोरकमिव पञ्जरगतं कृत्वा प्रतिषिद्धनिर्गमम्, आचार्यकुलपुत्रप्रायपरिजनपरिवारम्, अपनीताशेषशिशुजनक्रीडाव्यासङ्गम्, अनन्यमनसम्, अखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयांबभूव। प्रतिदिनं चोत्थायोत्थाय सह विलासवत्या विरलपरिजनस्तत्रैव गत्वैनमालोकयामास राजा ॥

चन्द्रापीडोऽप्यनन्यहृदयतया तथा नियन्त्रितो राज्ञा, अचिरेणैव कालेन यथास्वमात्मकौशलं प्रकटयद्भिः पात्रवशादुपजातोत्साहैराचार्यैरुपदिश्यमानाः सर्वा विद्या जग्राह । तथा हि—पदे, वाक्ये, प्रमाणे, धर्मशास्त्रे, राजनीतिषु, व्यायामविद्यासु, सर्वेष्वप्यायुधविशेषेषु, रथचर्यासु, गजपृष्ठेषु, तुरंगमेषु, वीणावेणुमुरजप्रभृतिषु वाद्येषु, भरतादिप्रणीतेषु नृत्तशास्त्रेषु, नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु, शकुनिरुतज्ञाने, यन्त्रप्रयोगे, विषापहरणे, सुरङ्गोपभेदे, तरणे, लङ्घने, प्लुतिषु, आरोहणे, सर्वलिपिषु, सर्वदेशभाषासु, अन्येष्वपि कलाविशेषेषु परं कौशलमवाप ॥

सहजा चास्याजस्रमभ्यस्यतो वृकोदरस्येव शैशव एवावि-

र्बभूव सर्वलोकविस्मयजननी महाप्राणता। एकैकेन कृपाणप्रहारेण बाल एव तालतरून्मृणालदण्डानिव लुलाव । दशपुरुषसंवाहन-योग्येन चायोदण्डेन श्रममकरोत्। ऋते च महाप्राणतायाः सर्वा-भिरन्याभिः कलाभिरनुचकार तं वैशम्पायनः । चन्द्रापीडस्य तु सकलकलाकलापपरिचयबहुमानेन शुकनासगौरवेण सहपांसुक्रीड-नतया च सर्वविस्रम्भस्थानं द्वितीयमिव हृदयं वैशम्पायनः परं मित्रमासीत् । निमेषमपि तेन विना स्थातुमेकाकी न शशाक । वैशम्पायनोऽपि तं न क्षणमपि विरहयांचकार ॥

एवं तस्य सर्वविद्यापरिचयमाचरतश्चन्द्रापीडस्य यौवना-रम्भः प्रादुर्भवन् रमणीयस्यापि द्विगुणां रमणीयतां पुपोष । लक्ष्म्या सह वितस्तार वक्षःस्थलम् । बन्धुजनमनोरथैः सहापूर्य-तोरुदण्डद्वयम् । स्वरेण सह गम्भीरतामाजगाम हृदयम् ॥

एवं च क्रमेण समारूढयौवनारम्भं परिसमाप्तसकलकला-विज्ञानम् अधीताशेषविद्यं चावगम्य, अनुमोदितमाचार्यैश्चन्द्रापी-डमानेतुं राजा बलाधिकृतं वलाहकनामानमाहूय प्राहिणोत् ॥

स गत्वा विद्यागृहं द्वाःस्थैः समावेदितः प्रविश्य, शिरसा प्रणम्य, सविनयमासने राजपुत्रानुमतो न्यषीदत् । स्थित्वा च मुहूर्तमात्रं वलाहकश्चन्द्रापीडमुपसृत्य दर्शितविनयो व्यजिज्ञपत्—"कुमार, महाराजः समाज्ञापयति—'पूर्णा नो मनोरथाः । अधीतानि शास्त्राणि । शिक्षिताः सकलाः कलाः । गतोऽसि सर्वास्वायुधविद्यासु परां प्रतिष्ठाम् । अनुमतोऽसि निर्गमाय विद्यागृहात्सर्वाचार्यैः । उपगृहीतशिक्षमवगतसकलकलाकलापं

पौर्णमासीशशिनमिव नवोद्गतं पश्यतु त्वां जनः। दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तःपुराणि। अयमत्र भवतो दशमो वत्सरो विद्यागृहमधिवसतः। प्रविष्टोऽसि षष्ठमनुभवन्वर्षम्। एवं संपिण्डितेनामुना षोडशेन प्रवर्धसे। तदद्यप्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्त्वा दर्शनमखिलाभ्यो मातृभ्यः, अभिवाद्य च गुरून्, अपगतनियन्त्रणो यथासुखमनुभव राज्यसुखानि। संमानय राजलोकम्। पूजय द्विजातीन्। परिपालय प्रजाः। आनन्दय बन्धुवर्गम्।' अयं च ते त्रिभुवनैकरत्नमनिलगरुडसमजव इन्द्रायुधनामा तुरंगमः प्रेषितो महाराजेन द्वारि तिष्ठति। एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्यमिति कृत्वा 'जलधिजलादुत्थितमयोनिजमिदमश्वरत्नमासादितं मया महाराजाधिरोहणयोग्यम्' इति संदिश्य प्रहितः। तदयमनुगृह्यतामधिरोहणेन। इदं च विनयोपपन्नानां कुलक्रमागतानां राजपुत्राणां सहस्रं परिचर्यार्थमनुप्रेषितं तुरंगमाधिरूढं द्वारि प्रणामलालसं प्रतिपालयति" इत्यभिधाय विरतवचसि वलाहके, चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा, नवजलधरध्वानगम्भीरया गिरा 'प्रवेश्यतामिन्द्रायुधः' इति निर्जिगमिषुरादिदेश॥

अथ वचनानन्तरमेव प्रवेशितम्, उभयतः खलीनकनककटकावलम्बाभ्यां पदे पदे कृताकुञ्चनप्रयत्नाभ्यां पुरुषाभ्यामवकृष्यमाणम्, ऊर्ध्वकरपुरुषप्राप्यपृष्ठभागम्, अतिनिष्ठुरेण मुहुर्मुहुः प्रकम्पितोदररन्ध्रेण हेषारवेण निर्भर्त्सयन्तमिवालीकवेगदुर्विदग्धं गरुत्मन्तम्, उत्कीर्णमिव जङ्घासु, विस्तारितमिवोरसि, श्लक्ष्णीकृत-

मिव मुखे, त्रैलोक्यसंचरणसहायमिव मारुतस्य, वेगसब्रह्मचारिणमिव मनसः, सकलभुवनार्घार्हमश्वातिशयमिन्द्रायुधमद्राक्षीत् ॥

दृष्ट्वा च तमदृष्टपूर्वमशेषलक्षणोपपन्नमश्वरूपातिशयम्, अतिधीरप्रकृतेरपि चन्द्रापीडस्य पस्पर्श विस्मयो हृदयम् । आसीच्चास्य मनसि—"सरभसविवर्तनवलितवासुकिभ्रमितमन्दरेण मथ्नता जलनिधिजलम्, इदमश्वरत्नमनभ्युद्धरता, किं नाम रत्नमुद्धृतं सुरासुरलोकेन । उच्चैःश्रवसा विस्मितहृदयो वञ्चितः खलु जलनिधिना शतमखः । मन्ये च भगवतो नारायणस्य चक्षुर्गोचरतामियता कालेन नायमुपगतः, येनाद्यापि तां गरुडारोहणव्यसनितां न परित्यजति । अहो खल्वतिशयितत्रिदशराजसमृद्धिरियं तातस्य राज्यलक्ष्मीः, यदेवंविधान्यपि सकलत्रिभुवनदुर्लभानि रत्नान्युपकरणतामुपगच्छन्ति । अतितेजस्वितया महाप्राणतया च सदैवतेवेयमस्याकृतिर्यत्सत्यमारोहणे शङ्कामिव मे जनयति । दैवतान्यपि हि मुनिशापवशादुज्झितनिजशरीरकाणि शापवचनोपनीतानि शरीरान्तराण्यध्यासत एव । असंशयमनेनापि महात्मना केनापि शापभाजा भवितव्यम् । आवेदयतीव मदन्तःकरणमस्य दिव्यताम्" इति विचिन्तयन्नेवारुरुक्षुरासनादुदतिष्ठत् ॥

मनसा च, तं तुरंगममनुपसृत्य 'महात्मन्नर्वन्, योऽसि सोऽसि । नमोऽस्तु ते । सर्वथा मर्षणीयोऽयमारोहणातिक्रमोऽस्माकम् । अपरिगतानि दैवतान्यप्यनुचितपरिभवभाञ्जि भवन्ति' इत्यामन्त्रयांबभूव । विदिताभिप्राय इव स तमिन्द्रायुधश्चटुलशिरःकेसरसटाहत्याकूणिताकेकरतारकेण तिर्यक्चक्षुषा विलोक्य

हेषारवमकरोत् । अथानेन मधुरहेषितेन दत्तारोहणाभ्यनुज्ञ इवे-न्द्रायुधमारुरोह चन्द्रापीडः । समारुह्य तं प्रादेशमात्रमिव त्रैलोक्य-मखिलं मन्यमानो निर्गत्य, अतिनिष्ठुरेण खुरपुटानां रवेण हेषितेन च बधिरीकृतसकलभुवनविवरमदृष्टपर्यन्तमश्वसैन्यमपश्यत् । तच्च सागरजलमिव चन्द्रोदयेन चन्द्रापीडनिर्गमेन सकलमेव संचचा-लाश्वीयम् । अहमहमिकया च प्रणामलालसाः सरभसापनीतात-पत्रशून्यशिरसः परस्परोत्पीडनकुपिततुरंगमनिवारणायस्ता राज-पुत्रास्तं पर्यवारयन्त । एकैकशश्च प्रतिनामग्रहणमावेद्यमाना वला-हकेन ते दूरावनतैः शिरोभिः प्रणेमुः ॥

चन्द्रापीडस्तु तान्सर्वान्मानयित्वा यथोचितम्, अनन्तर-तुरंगमाधिरूढेनानुगम्यमानो वैशम्पायनेन, स्थूलमुक्ताकलापजाल-कावृतेनोपरि चिह्नीकृतं केसरिणमुद्वहतातिमहता कार्तस्वरदण्डेन ध्रियमाणेनातपत्रेण निवारितातपः, जय जीवेति च मधुरवचसा मङ्गलप्रायमनवरतमुच्चैः पठता वन्दिजनेन स्तूयमानः, नगराभि-मुखः प्रतस्थे ॥

क्रमेण च तं समासादितविग्रहमनङ्गमिवावतीर्णं नगरमार्ग-मनुप्राप्तमवलोक्य, सर्व एव परित्यक्तसकलव्यापारो जनः सम-जनि । "अहो वयमतिपुण्यभाजः, यदिमाममानुषीमस्याकृति-मन्तःसमारूढप्रीतिरसनिष्यन्दाविस्तारितेन लोचनयुगलेनान्विवारि-ताः पश्यामः । सफला नोऽद्य जाता जन्मवत्ता । सर्वथा नमोऽस्मै रूपान्तरधारिणे भगवते चन्द्रापीडच्छद्मने पुण्डरीकेक्षणाय" इति वदन्नारचितप्रणामाञ्जलिर्नगरलोकः प्रणनाम । सर्वतश्च समपा-

वृतकवाटपुटप्रकटवातायनसहस्रतया चन्द्रापीडदर्शनकुतूहलान्नगरमपि समुन्मीलितलोचननिवहमिवाभवत् । क्रमेण च चन्द्रापीडो राजद्वारमासाद्य तुरंगमादवततार ॥

अवतीर्य च करतलेन करे वैशम्पायनमवलम्ब्य, पुरः सविनयं प्रस्थितेन वलाहकेनोपदिश्यमानमार्गः, त्रिभुवनमिव पुञ्जीभूतम्, आगृहीतकनकवेत्रलतैः सितवारवाणधारिभिः महाप्रमाणैर्दिवानिशमालिखितैरिवोत्कीर्णैरिव तोरणस्तम्भनिषण्णैर्द्वारपालैरनुज्झितद्वारदेशम्, अन्तर्गतायुधनिवहाभिराशीविषकुलसंकुलाभिः पातालगुहाभिरिवातिगम्भीराभिरायुधशालाभिरुपेतम्, अनवरतसंगीतमृदङ्गध्वनिमामीलितलोचनत्रिभागेण वामदशनकोटिनिषण्णहस्तेन निश्चलकर्णतालेनाकर्णयता 'गन्धमादननाम्ना गन्धहस्तिना सनाथीकृतैकदेशम्, उज्ज्वलपट्टकम्बलपटप्रावारितपृष्ठैश्च भूपालवल्लभैर्मन्दुरागतैस्तुरंगमैरुद्भासितम्, अधिकरणमण्डपगतैश्चार्यवेषैरत्युच्चवेत्रासनोपविष्टैर्धर्ममयैरिव धर्माधिकारिभिर्महापुरुषैरधिष्ठितम्, अधिगतसकलग्रामनगरनामभिरेकभवनमिव जगदखिलमालोकयद्भिरालिखितसकलभुवनव्यापारतया धर्मराजनगरव्यतिकरमिव दर्शयद्भिरधिकरणलेखकैरालिख्यमानशासनशतसहस्रम्, आस्थानमण्डपगतेन च यथोचितासनोपविष्टेन भावयता नरपतिकृतकाव्यसुभाषितानि गृह्णता कविगुणान् मूर्धाभिषिक्तेन सामन्तलोकेनाधिष्ठितम्, एकदेशनिषण्णचामीकरशृङ्खलासंयतश्वगणम्, अनेककुब्जकिरातवर्षवरबधिरवामनकमूकसंकुलम्, इभपतिमदपरिमलामर्षजृम्भितैश्च निष्कूजद्भिः पञ्जरकेसरि-

भिरुद्भास्यमानम्, जलधरसनाथमिव कृष्णागुरुधूमपटलैः, सबालातपमिव रक्ताशोकैः, सतारागणमिव मुक्ताकलापैः, सवर्षासमयमिव धारागृहैः, सतटिल्लतमिव हेममयीभिर्मयूरयष्टिभिः, सगृहदैवतमिव सालभञ्जिकाभिः, उत्कृष्टकविगद्यमिव विविधवर्णश्रेणिप्रतिपाद्यमानाभिनवार्थसंचयम्, संध्यासमयमिव दृश्यमानचन्द्रापीडोदयम्, बलभद्रमिव कादम्बरीरसविशेषवर्णनाकुलम्, दिव्यमुनिगणमिव कलापिसनाथश्वेतकेतुशोभितं राजकुलं विवेश ॥

ससंभ्रमोपगतैश्च कृतप्रणामैः प्रतीहारमण्डलैरुपदिश्यमानमार्गः, पदे पदे चाभ्यन्तरविनिर्गताभिराचारकुशलाभिरन्तःपुरवृद्धाभिः क्रियमाणावतरणमङ्गलः, भुवनान्तराणीव विविधप्राणिसहस्रसंकुलानि सप्त कक्ष्यान्तराण्यतिक्रम्य, कुलक्रमागतैरुदात्तान्वयैरनुरक्तैः सर्वतः शरीररक्षाधिकारनियुक्तैः पुरुषैः परिवृतम्, हंसधवलशयनतले निषण्णं पितरमपश्यत् ॥

'आलोकय' इति च प्रतीहारवचनानन्तरमतिदूरावनतेन शिरसा कृतप्रणामम् 'एह्येहि' इत्यभिदधानः, दूरादेव प्रसारितभुजयुगलः, तं पिता विनायावनतमालिलिङ्ग । आलिङ्गितोन्मुक्तश्च पितुश्चरणपीठसमीपे पिण्डीकृतमुत्तरीयमात्मताम्बूलकरङ्कवाहिन्या सत्वरमासनीकृतम् 'अपनय' इति शनैर्वदन्नग्रचरणेन समुत्सार्य, चन्द्रापीडः क्षितितल एव निषसाद । अनन्तरनिहिते चास्यासने राज्ञा सुतनिर्विशेषमुपगूढो वैशम्पायनो न्यषीदत् । मुहूर्तमिव स्थित्वा 'गच्छ वत्स, पुत्रवत्सलां मातरमभिवाद्य दर्शनलालसा यथाक्रमं सर्वा जननीर्दर्शनेनानन्दय' इति विसर्जितः पित्रा, सवि-

नयमुत्थाय, निवारितपरिजनः, वैशम्पायनद्वितीयः, अन्तःपुर-प्रवेशयोग्येन राजपरिजनेनोपदिश्यमानवर्त्मा अन्तःपुरमाययौ ॥

तत्र धवलकञ्चुकावच्छन्नशरीरैरनेकशतसंख्यैः समन्तात्परिवृतां शुद्धान्तान्तर्वंशिकैः, अतिप्रशान्ताकाराभिश्च कषायरक्ताम्बरधारिणीभिर्भूतपूर्वाः पुण्याः कथाः कथयन्तीभिर्जरत्प्रव्रजिताभिर्विनोद्यमानाम्, समुपसृत्य मातरं ननाम ॥

सा तु तं ससंभ्रममुत्थाप्य, सत्यप्याज्ञासंपादनदक्षे पार्श्वपरिवर्तिनि परिजने स्वयमेव कृतावतरणका, हृदयेनान्तःशुभशतान्यभिध्यायन्ती, मूर्धन्युपाघ्राय, तं सुचिरमाशिश्लेष । अनन्तरं च तथैव कृतयथोचितसमुपचारमाश्लिष्टवैशम्पायना स्वयमुपविश्य विनयादवनितले समुपविशन्तमाकृष्य बलादनिच्छन्तमपि चन्द्रापीडमुत्सङ्गमारोपितवती । ससंभ्रमपरिजनोपनीतायामासन्द्यामुपविष्टे च वैशम्पायने, चन्द्रापीडं पुनःपुनरालिङ्गय, ललाटदेशे वक्षसि भुजशिखरयोश्च मुहुर्मुहुः करतलेन परामृशन्ती विलासवती तमवादीत्—"वत्स, कठिनहृदयस्ते पिता, येनेयमाकृतिरीदृशी त्रिभुवनलालनीया क्लेशमतिमहान्तमियन्तं कालं लम्भिता । कथमसि सोढवानतिदीर्घामिमां गुरुजनयन्त्रणाम् । अहो बालस्यापि सतः कठोरस्येव ते महद्धैर्यम् । अहो विगलितशिशुजनक्रीडाकौतुकलाघवमर्भके त्वयि हृदयम् । अहो गुरुजनस्योपरि भक्तिरसाधारणी । सर्वथा यथा पितुः प्रसादात्समस्ताभिरुपेतो विद्याभिरालोकितोऽसि, एवमचिरेणैव कालेनानुरूपाभिर्वधूभिरुपेतमालोकयिष्यामि" इत्येवमभिधाय लज्जास्मितावनतं

कपोले पर्यचुम्बदेनम् । एवं च तत्रापि नातिचिरमेव स्थित्वा, क्रमेण सर्वान्तःपुराणि दर्शनेनानन्दयामास । निर्गत्य च राजकुलद्वारावस्थितमिन्द्रायुधमारुह्य तथैव तेन राजपुत्रलोकेनानुगम्यमानः, शुकनासं द्रष्टुमयासीत् ॥

समन्ततो विविधशास्त्राञ्जनोन्मीलितबुद्धिलोचनैः शाक्यमुनिशासनपथधौरेयै रक्तपटैः पाशुपतैर्द्विजैश्च दिवानिशमासेव्यमानं शुकनासगृहद्वारमासाद्य, राजकुल इव राजपुत्रो बाह्याङ्गण एव तुरंगादवततार । द्वारदेशावस्थापिततुरंगश्च वैशम्पायनमवलम्ब्य, नवनवसुधावदातप्रासादसहस्रनिरन्तरं द्वितीयमिव राजकुलं शुकनासभवनं विवेश । प्रविश्य चानेकनरेन्द्रसहस्रमध्योपविष्टमपरमिव पितरमुपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे ॥

शुकनासस्तं ससंभ्रममुत्थायानुपूर्व्येणोत्थितराजलोकः सादरमभिमुखदत्ताविरलपदः प्रहर्षविस्फारितलोचनागतानन्दजलकणः सह वैशम्पायनेन प्रेम्णा गाढमालिलिङ्ग । आलिङ्गितोन्मुक्तश्च सादरोपनीतमपहाय रत्नासनम्, अवनावेव राजपुत्रः समुपाविशत् । तदनु च वैशम्पायनः ॥

समुपविष्टे च राजपुत्रे शुकनासवर्जमन्यदखिलमवनिपालचक्रमुज्झितनिजासनमवनितलमभजत । स्थित्वा च तूष्णीं क्षणमिव शुकनासः समुद्गतप्रीतिपुलकैरङ्गैरावेद्यमानहृदयहर्षप्रकर्षः, तमब्रवीत्—"तात चन्द्रापीड, अद्य खलु देवस्य तारापीडस्य समाप्तविद्यमुपारूढयौवनमालोक्य भवन्तम्, सुचिराद्भुवनराज्यफलप्राप्तिरुपजाता । अद्य समृद्धाः सर्वा गुरुजनाशिषः । अद्य फलि-

तमनेकजन्मान्तरोपात्तमवदातं कर्म । अद्य प्रसन्नाः कुलदेवताः । न ह्यपुण्यभाजां भवादृशास्त्रिभुवनविस्मयहेतवः पुत्रतां प्रतिपद्यन्ते । क्वेदं वयः । क्वेयममानुषी शक्तिः । क्व चेदमशेषविद्याग्रहण-सामर्थ्यम् । अहो, धन्याः प्रजाः, यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता । किं खलु कृतमवदातं कर्म वसुंधरया, ययासि भर्ता समासादितः । सर्वथा कल्पकोटीर्महावराह इव दंष्ट्रावलयेन वह बाहुना वसुंधराभारं सह पित्रा" इत्यभिधाय च, स्वयमाभरणवसनकुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयांचकार ॥

विसर्जितश्चोत्थायान्तःपुरं प्रविश्य, दृष्ट्वा वैशम्पायनमातरं मनोरमाभिधानाम्, निर्गत्य समारुह्येन्द्रायुधम्, पित्रा पूर्वकल्पितं प्रतिच्छन्दकमिव राजकुलस्य कुमारो भवनं जगाम । गत्वा च श्रीमण्डपावस्थिते शयने मुहूर्तमुपविश्य, सह तेन राजपुत्रलोकेनाभिषेकादिकमशनावसानमकरोद्दिवसविधिम् । अभ्यन्तरे च स्वशयनीयगृह एवेन्द्रायुधस्यावस्थानमकल्पयत् ॥

एवंप्रायेण चास्योदन्तेन तदहः परिणतिमुपययौ । गगनतलादवतरन्त्या दिवसश्रियः पद्मरागनूपुरमिव स्वप्रभापिहितरन्ध्रं रविमण्डलमुन्मुक्तपादं पपात । कमलिनीपरिमलपरिचयागतालिमालाकुलितकण्ठं कालपाशैरिव चक्रवाकमिथुनमाकृष्यमाणं विजघटे ॥

क्रमेण च प्रतीचीकर्णपूररक्तोत्पले लोकान्तरमुपगते भगवति गभस्तिमालिनि, कमलिनीनिपीतमातपमुन्मूलयितुमन्धकार-

पल्लवेष्विव विशत्सु रक्तकमलोदराणि मधुकरकुलेषु, शनैः शनैश्च गलिते संध्यारागे, दिक्षु दिक्षु विक्षिप्तेषु संध्यादेवतार्चनबलिपिण्डेषु, कृतराजस्वस्त्ययनेषु निष्क्रामत्सु पुरोहितेषु, प्रज्वलितदीपिकासहस्र-प्रतिबिम्बचुम्बितेषु कृतविकचचम्पकदलोपहारेष्विव मणिभूमि-कुट्टिमेषु, सूर्यकान्तमणिभ्य इव संक्रान्तानलेषु ज्वलत्सु मानिनीनां शोकविधुरेषु हृदयेषु, प्रवृत्ते प्रदोषसमये, चन्द्रापीडो राजकुलं गत्वा पितुः समीपे मुहूर्तं स्थित्वा, दृष्ट्वा च विलासवतीम्, आगत्य स्वभवनम्, शयनतलमधिशिश्ये ॥

प्रभातायां च निशीथिन्याम्, समुत्थाय समभ्यनुज्ञातः पित्रा, अभिनवमृगयाकौतुकावकृष्यमाणहृदयः, भगवत्यनुदित एव सहस्ररश्मौ, आरुह्येन्द्रायुधम्, अग्रतो वालेयप्रमाणाना-कर्षद्भिश्चामीकरशृङ्खलाभिः कौलेयकान् कोदण्डपाणिभिः श्वपोष-कैरनवरतकृतकोलाहलैः प्रधावद्भिर्द्विगुणीक्रियमाणगमनोत्साहः, बहुगजतुरगपदातिपरिवृतो वनं ययौ। तत्र च कर्णान्तावकृष्ट-मुक्तैर्नाराचैर्वनवराहान् केसरिणः कुरङ्गकांश्च सहस्रशो जघान। अन्यांश्च जीवत एव महाप्राणतया स्फुरतो जग्राह ॥

समारूढे च मध्यमह्नः सवितरि, वनात्, स्नानोत्थितेनेव श्रमसलिलबिन्दुवर्षमनवरतमुज्झता श्रमशिथिलमुखगलितफेनिल-रुधिरलवेनेन्द्रायुधेनोह्यमानः, दूरविच्छिन्नेन पदातिपरिजनेन शून्यीकृतपुरोभागः, प्रजवितुरंगमाधिरूढैरल्पावशिष्टैः सह राज-पुत्रैः 'एवं मृगपतिः, एवं वराहः, एवं शरभः' इति तमेव मृगयावृत्तान्तमुच्चारयन्, स्वभवनमाजगाम ॥

अवतीर्य च तुरंगमात्ससंभ्रमप्रधावितपरिजनोपनीते समुपविश्यासने, वारवाणमवतार्य, अपनीय च शेषं तुरंगमाधिरोहणोचितं वेषपरिग्रहम्, इतस्ततः प्रचलिततालवृन्तपवनापनीयमानश्रमो मुहूर्तं विशश्राम । विश्रम्य च मणिरजतकनककलशशतसनाथां स्नानभूमिमगात् । निर्वर्तिताभिषेकव्यापारस्य च कृतदेवतार्चनस्याङ्गरागभूमौ समुपविष्टस्य, राज्ञा विसर्जिता राजकुलपरिचारिकाः पटलकविनिहितानि विविधान्याभरणानि माल्यान्यङ्गरागान्वासांसि चादाय, पुरतस्तस्योपतस्थुः, उपनिन्युश्च । यथाक्रममादाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनम्, उपरचिताङ्गरागः, दत्त्वा च समीपवर्तिभ्यो यथार्हमाभरणवसनाङ्गरागकुसुमानि, आहारमण्डपमगच्छत् ॥

तत्र च द्विगुणीकृतकुथासनोपविष्टः, समीपोपविष्टेन तद्गुणोपवर्णनपरेण वैशम्पायनेन यथार्हभूमिभागोपवेशितेन राजपुत्रलोकेन 'इदमस्मै दीयताम्, इदमस्मै दीयताम्' इति प्रसादविशेषदर्शनसंवर्धितसेवारसेनाहारविधिमकरोत् । उपस्पृश्य च, गृहीतताम्बूलस्तस्मिन्मुहूर्तमिव स्थित्वा, इन्द्रायुधसमीपमगमत् । तत्र चानुपविष्ट एव तद्गुणोपवर्णनप्रायालापाः कथाः कृत्वा, स्वयमेवेन्द्रायुधस्य पुरो यवसमाकीर्य निर्गत्य राजकुलमयासीत् । तेनैव क्रमेणावलोक्य राजानम्, आगत्य निशामनैषीत् ॥

अपरेद्युश्च प्रभातसमय एव सर्वान्तःपुराधिकृतम्, अनुमार्गागतया शक्रगोपकालोहितरागेणांशुकेन रचितावगुण्ठनया समसुवृत्ततुङ्गनासिकया विकसितपुण्डरीकधवललोचनया महानु-

भावाकारयानुगम्यमानं कन्यकया, कैलासनामानं कञ्चुकिनमायान्तमपश्यत् ॥

स कृतप्रणामः समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास—"कुमार, महादेवी विलासवती समाज्ञापयति—"इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीमवजित्य कुलूतेश्वरदुहिता पत्रलेखाभिधाना बालिका सती बन्दीजनेन सहानीयान्तःपुरपरिचारिकामध्यमुपनीता । सा मया विगतनाथा राजदुहितेति समुपजातस्नेहया दुहितृनिर्विशेषमियन्तं कालमुपलालिता संवर्धिता च । तदियमिदानीमुचिता भवतस्ताम्बूलकरङ्कवाहिनीति कृत्वा मया प्रेषिता । न चास्यामायुष्मता परिजनसामान्यदृष्टिना भवितव्यम् । स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया । सुहृदिव सर्वविस्रम्भेष्वभ्यन्तरीकरणीया । दीर्घकालसंवर्धितस्नेहतया सुतायामिव हृदयमस्यामस्ति मे । नियतं स्वयमेवेयमतिविनीततया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति । अविदितशीलश्चास्याः कुमार इति संदिश्यते । सर्वथा तथा कल्याणिना प्रयतितव्यम्, यथेयमतिचिरमुचिता परिचारिका ते भवति" इत्यभिधाय विरतवचसि कैलासे, कृताभिजातप्रणामां पत्रलेखामनिमिषलोचनं सुचिरमालोक्य, चन्द्रापीडः 'यथाज्ञापयत्यम्बा' इत्येवमुक्त्वा कञ्चुकिनं प्रेषयामास ॥

पत्रलेखा तु ततः प्रभृति दर्शनेनैव समुपजातसेवारसा, न दिवा, न रात्रौ, न सुप्तस्य, नासीनस्य, नोत्थितस्य, न भ्रमतः, न राजकुलगतस्य, छायेव राजसूनोः पार्श्वं मुमोच । चन्द्रापीडस्यापि

तस्यां दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत् । आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविस्रम्भेष्वमन्यत ॥

एवं समतिक्रामत्सु केषुचिद्दिवसेषु, राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः, प्रतीहारानुपकरणसंभारसंग्रहार्थ-मादिदेश ॥

समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागत-मारूढविनयमपि विनीततरमिच्छञ्शुकनासः सविस्तरमुवाच— "तात चन्द्रापीड, विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पम-प्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यम् अप्रदीप-प्रभापनेयम् अतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्ध-त्वम् इत्यतो विस्तरेणाभिधीयसे । गर्भेश्वरत्वम्, अभिनवयौवन-त्वम्, अप्रतिमरूपत्वम्, अमानुषशक्तित्वं चेति महतीयं खल्व-नर्थपरंपरा । सर्वाविनयानामेकैकमप्येषामायतनम् । किमुत सम-वायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्य-मुपयाति बुद्धिः । अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजो-भ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवा-दृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि मनसि, स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः । गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूल-मभव्यस्य । इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुद-

यमधिकतरमुपजनयति । हरति च सकलमतिमलिनमप्यन्धकार-
मिव दोषजातं प्रदोषसमयनिशाकर इव गुरूपदेशः । अयमेव
चानास्वादितविषयरसस्य ते काल उपदेशस्य । कुसुमशरशरप्रहा-
रजर्जरिते हि हृदये जलमिव गलत्युपदिष्टम् । अकारणं च भवति
दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य । चन्दनप्रभवो न दहति
किमनलः ? किंवा प्रशमहेतुनापि न प्रचण्डतरीभवति बडबानलो
वारिणा ? गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं
स्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, असुवर्णविर-
चनमग्राम्यं कर्णाभरणम् । विशेषेण तु राज्ञाम् । विरला हि
तेषामुपदेष्टारः । प्रतिशब्दक इव राजवचनमनुगच्छति जनो
भयात् । उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि ते
न शृण्वन्ति । शृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः,
खेदयन्ति हितोपदेशदायिनो गुरून् । अहंकारदाहज्वरमूर्च्छान्ध-
कारिता विह्वला हि राजप्रकृतिः ॥

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् ।
इयं हि लक्ष्मीः क्षीरसागरात्, इन्दुशकलादेकान्तवक्रताम्,
उच्चैःश्रवसश्चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्,
कौस्तुभमणेरतिनैष्ठुर्यम् इत्येतानि सहवासपरिचयवशाद्विरहविनो-
दचिह्नानि गृहीत्वैवोद्गता । न ह्येवंविधमपरमपरिचितमिह जगति
किंचिदस्ति, यथेयमनार्या । लब्धापि खलु दुःखेन परिपाल्यते ।
दृढगुणपाशसंदाननिस्पन्दीकृतापि नश्यति । न परिचयं रक्षति ।
नाभिजनमीक्षते । न कुलक्रममनुवर्तते । न शीलं पश्यति । न

श्रुतमाकर्णयति । न धर्ममनुरुध्यते । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । गन्धर्वनगरलेखेव पश्यत एव नश्यति । अद्याप्यारूढमन्दरपरिवर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति । पारुष्यमिवोपशिक्षितुमसिधारासु निवसति । दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः । पातालगुहेव तमोबहुला । प्रावृडिवाचिरद्युतिकारिणी । स्वल्पसत्त्वमुन्मत्तीकरोति । सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम् । गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्त्वममङ्गलमिव न बहु मन्यते । सुजनमनिमित्तमिव न पश्यति । अभिजातमहिमिव लङ्घयति । शूरं कण्टकमिव परिहरति । दातारं दुःस्वप्नमिव न स्मरति । विनीतं पातकिनमिव नोपसर्पति । मनस्विनमुन्मत्तमिवोपहसति ॥

यथा यथा चेयं चपला दीप्यते, तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति । तथा हि—इयं संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, आवासदरी दोषाशीविषाणाम्, अकालप्रावृट् गुणकलहंसकानाम्, प्रस्तावना कपटनाटकस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य ॥

न हि तं पश्यामि, यो ह्यपरिचितयानया न निर्भरमुपगूढः, यो वा न विप्रलब्धः । नियतमियमालेख्यगतापि चलति, श्रुतात्यतिसंधत्ते, चिन्तितापि वञ्चयति । एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः, सर्वाविनयाधिष्ठानतां च गच्छन्ति । तथाहि—अभिषेकसमय-

एवैषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्। अग्निकार्य-धूमेनेव मलिनीभवति हृदयम् । उष्णीषपट्टबन्धेनेवाच्छाद्यते जरागमनस्मरणम्। आतपत्रमण्डलेनेवापवार्यते परलोकदर्शनम्। चामरपवनैरिवापह्रियते सत्यवादिता । वेत्रदण्डैरिवोत्सार्यन्ते गुणाः। तथाहि—केचिद्धनलवलाभावलेपविस्मृतजन्मानः, विविधविषयग्रासलालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः, प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाकुलीक्रियमाणा विह्वलतामुपयान्ति। धनोष्मणा पच्यमाना इव विचेष्टन्ते । गाढप्रहाराहता इवाङ्गानि न धारयन्ति। कुलीरा इव तिर्यक्परिभ्रमन्ति। अधर्मभग्नगतयः पङ्गव इव परेण संचार्यन्ते । मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति। आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति। उत्कुपितलोचना इव तेजस्विनो नेक्षन्ते। कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते। तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति। इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति। श्मशानाग्नय इवातिरौद्रभूतयः। श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति। चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति । अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति।(तदवस्थाश्च वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति ॥)

अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीधूर्तबकैः, द्यूतं विनोद इति, मृगया श्रम इति, पानं विलास इति,

गुरुवचनावधीरणम् अपरप्रणेयत्वमिति, परिभवसहत्वं क्षमेति, स्वच्छन्दता प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, तरलता उत्साह इति, दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणाः, वित्तमदमत्तचित्ताः, निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमानाः, मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः, प्रारब्धदिव्योचितचेष्टानुभावाः, सर्वजनस्योपहास्यतामुपयान्ति । आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति । मनसा देवताध्यारोपणप्रतारणादन्तःप्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं संभावयन्ति । त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते । दर्शनप्रदानमप्यनुग्रहं गणयन्ति । दृष्टिपातमप्युपकारपक्षे स्थापयन्ति । संभाषणमपि संविभागमध्ये कुर्वन्ति । आज्ञामपि वरप्रदानं मन्यन्ते । स्पर्शमपि पावनमाकलयन्ति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः । न पूजयन्ति द्विजातीन् । न मानयन्ति मान्यान् । नाभ्युत्तिष्ठन्ति गुरून् । अनर्थकायासान्तरितविषयोपभोग इत्युपहसन्ति विद्वज्जनम् । जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय । कुप्यन्ति हितवादिने । सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तेन सह सुखमवतिष्ठन्ते, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति ॥

किं वा तेषां सांप्रतम्, येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणम्, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, परातिसंधानपरा मन्त्रिण उपदेष्टारः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः ॥

तदेवंप्रायेऽतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन्, महामोहकारिणि च यौवने, कुमार, तथा प्रयतेथाः ; यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः। यथा च न प्रहस्यसे विटैः, न प्रतार्यसे कुशलैः, नावलुप्यसे सेवकवृकैः, न प्रलोभ्यसे वनिताभिः, नापह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः, पित्रा च महता प्रयत्नेन समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे—विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्यौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुंधराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति" इत्येतावदभिधायोपशशाम ॥

उपशान्तवचसि शुकनासे, चन्द्रापीडस्ताभिरमलाभिरुप-

देशवाग्भिः प्रक्षालित इवोन्मीलित इव पवित्रीकृत इवोद्भासित इव प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम ॥

ततः कतिपयदिवसापगमे च, राजा स्वयमुत्क्षिप्तमङ्गलकलशः सह शुकनासेन, पुण्येऽहनि, पुरोधसा संपादिताशेषराज्याभिषेकमङ्गलम् अनेकनरपतिसहस्रपरिवृतः, सर्वेभ्यस्तीर्थेभ्यः सर्वाभ्यो नदीभ्यः सर्वेभ्यश्च सागरेभ्यः समाहृतेन सर्वौषधिभिः सर्वफलैः सर्वमृद्भिः सर्वरत्नैश्च परिगृहीतेनानन्दबाष्पजलमिश्रेण मन्त्रपूतेन वारिणा सुतमभिषिषेच । अभिषेकसलिलार्द्रदेहं च तं लतेव पादपान्तरं निजपादपमुज्झत्यपि तारापीडं तत्क्षणमेव संचक्राम राज्यलक्ष्मीः । अनन्तरमखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयमा पादतलादामोदिना चन्दनेनानुलिप्तमूर्तिः, तत्कालप्रतिपन्नवेत्रदण्डेन पित्रा स्वयं पुरः प्रारब्धसमुत्सारणः, सभामण्डपमुपगम्य, काञ्चनमयं शशीव मेरुशृङ्गं चन्द्रापीडः सिंहासनमारुरोह ॥

आरूढस्य चास्य कृतयथोचितसकलराजलोकसंमानस्य मुहूर्तं स्थित्वा दिग्विजयप्रयाणशंसी प्रस्थानदुन्दुभिरामन्थरं दध्वान । ततो दुन्दुभिरवमाकर्ण्य 'जय जय' इति च सर्वतः समुद्घुष्यमाणजयशब्दः, सिंहासनात्सह द्विषतां श्रिया संचचाल चन्द्रापीडः । समन्तात्ससंभ्रमोत्थितैरनुगम्यमानो नरपतिसहस्रैः, आस्थानमण्डपान्निरगात् । निर्गत्य च पूर्वारूढया पत्रलेखया समध्यासितामुचितमङ्गल्यालङ्कारां करेणुकामधिरुह्य, मुक्ताफलजालिना शतशलाकेनातपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे ॥

किं वा तेषां सांप्रतम्, येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणम्, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, परातिसंधानपरा मन्त्रिण उपदेष्टारः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः ॥

तदेवंप्रायेऽतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन्, महामोहकारिणि च यौवने, कुमार, तथा प्रयतेथाः ; यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः । यथा च न प्रहस्यसे विटैः, न प्रतार्यसे कुशलैः, नावलुप्यसे सेवकवृकैः, न प्रलोभ्यसे वनिताभिः, नापह्रियसे सुखेन । कामं भवान्प्रकृत्यैव धीरः, पित्रा च महता प्रयत्नेन समारोपितसंस्कारः । तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि । तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान् । इदमेव च पुनः पुनरभिधीयसे—विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति । सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्यौवराज्याभिषेकमङ्गलम् । कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय बन्धुवर्गम् । अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुंधराम् । अयं च ते कालः प्रतापमारोपयितुम् । आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति" इत्येतावदभिधायोपशशाम ॥

उपशान्तवचसि शुकनासे, चन्द्रापीडस्ताभिरमलाभिरुप-

देशवाग्भिः प्रक्षालित इवोन्मीलित इव पवित्रीकृत इवोद्भासित इव प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम ॥

ततः कतिपयदिवसापगमे च, राजा स्वयमुत्क्षिप्तमङ्गलकलशः सह शुकनासेन, पुण्येऽहनि, पुरोधसा संपादिताशेषराज्याभिषेकमङ्गलम् अनेकनरपतिसहस्रपरिवृतः, सर्वेभ्यस्तीर्थेभ्यः सर्वाभ्यो नदीभ्यः सर्वेभ्यश्च सागरेभ्यः समाहृतेन सर्वौषधिभिः सर्वफलैः सर्वमृद्भिः सर्वरत्नैश्च परिगृहीतेनानन्दबाष्पजलमिश्रेण मन्त्रपूतेन वारिणा सुतमभिषिषेच । अभिषेकसलिलार्द्रदेहं च तं लतेव पादपान्तरं निजपादपमुज्झत्यपि तारापीडं तत्क्षणमेव संचक्राम राज्यलक्ष्मीः । अनन्तरमखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयमा पादतलादामोदिना चन्दनेनानुलिप्तमूर्तिः, तत्कालप्रतिपन्नवेत्रदण्डेन पित्रा स्वयं पुरः प्रारब्धसमुत्सारणः, सभामण्डपमुपगम्य, काञ्चनमयं शशीव मेरुशृङ्गं चन्द्रापीडः सिंहासनमारुरोह ॥

(आरूढस्य चास्य कृतयथोचितसकलराजलोकसंमानस्य मुहूर्तं स्थित्वा दिग्विजयप्रयाणशंसी प्रस्थानदुन्दुभिरामन्थरं दध्वान । ततो दुन्दुभिरवमाकर्ण्य 'जय जय' इति च सर्वतः समुद्धुष्यमाणजयशब्दः, सिंहासनात्सह द्विषतां श्रिया संचचाल चन्द्रापीडः । समन्तात्ससंभ्रमोत्थितैरनुगम्यमानो नरपतिसहस्रैः, आस्थानमण्डपान्निरगात् । निर्गत्य च पूर्वारूढया पत्रलेखया समध्यासितामुचितमङ्गल्यालङ्कारां करेणुकामधिरुह्य, मुक्ताफलजालिना शतशलाकेनातपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे ॥

विनिर्गतश्च बहुलसिन्दूररेणुपाटलेन क्षितितलदोलायमान-स्थूलमुक्ताकलापावचूलेन सितकुसुममालाजालशबलशिरसा संलग्न-संध्यातपेन तिर्यगावर्जितश्वेतगङ्गाप्रवाहेण तारागणदन्तुरितशिखर-शिलातलेन मेरुगिरिणेव गन्धमादनेनानुगम्यमानः, कनकालङ्कार-प्रभाकल्माषितावयवेन च समाकृष्यमाणेनेन्द्रायुधेन सनाथीकृत-पुरोभागः, शनैः शनैः प्रथममेव शातक्रतवीमाशामभिप्रतस्थे ॥

उच्चलितस्य चास्य, स्वभवनादुपपादितप्रस्थानमङ्गलः, धवल-दुकूलवासाः, सितकुसुमाङ्गरागः, महता बलसमूहेन नरेन्द्रवृन्दै-श्चानुगम्यमानः, धृतधवलातपत्रः, द्वितीय इव युवराजः, त्वरित-पदसंचारिण्या करिण्या वैशम्पायनः समीपमाजगाम । आगत्य च रजनिकर इव रवेरासन्नवर्ती बभूव । अनन्तरमितश्चेतश्च 'निर्गतो युवराजः' इति समाकर्ण्य प्रधावतां बलानां भरेण तत्क्षणमाचकम्पे मेदिनी । क्षणेन च तुरगमयमिव महीतलम्, कुञ्जरमयमिव दिक्चक्रवालम्, आतपत्रमण्डलमयमिवान्तरिक्षम्, इभमदगन्धमय इव समीरणः, भूपालमयीव प्रजासृष्टिः, आभर-णांशुमयीव वृष्टिः, किरीटमय इव दिवसः, जयशब्दमयमिव त्रिभुवनमभवत् ॥ )

बलबहुलकोलाहलभीता इव धवलध्वजनिवहनिरन्तरावृता ययुः क्वापि दश दिशः । मलिनावनिरजःसंस्पर्शशङ्कितमिव समद-गजघटावचूलसहस्रसंरुद्धमतिदूरमम्बरतलमपससार । प्रबलवेत्रि-वेत्रलतासमुत्सार्यमाणा इव तुरगखुररजोधूसरताभीता इवार्ककि-रणा मुमुचुः पुरोभागम् । इभकरशीकरनिर्वापणत्रस्त इवातपत्र-

संछादितातपो दिवसो ननाश । क्रमेण प्रसर्पतो बलस्य पुरः प्रधावतां जनकदम्बकानां कोलाहलेन, तारतरदीर्घेण च काहलानां निनादेन, खुररवविमिश्रेण च वाजिनां हेषारवेण, अनवरतकर्णतालस्वरसंपृक्तेन च दन्तिनामाडम्बररवेण, मङ्गलशङ्खशब्दसंवर्धितध्वनीनां च प्रयाणपटहानां निनादेन, मुहुर्मुहुरितस्ततस्ताड्यमानानां डिण्डिमानां च निस्वनेन, जर्जरीकृतश्रवणपुटस्य मूर्च्छेवाभवज्जनस्य ॥

क्रमेण च विकचकुवलयवनमिव नवोदकेन गगनतलमवष्टभ्यमानमलक्ष्यत क्षीरोदफेनपाण्डुना क्षितिक्षोदेन । बहुलरजोधूसरितमशिशिरकिरणबिम्बमवचूलचामरमिव निष्प्रभमभवत् । दुकूलपट्टधवला कदलिकेव कलुषतामाजगाम गगनापगा । नरपालबलभरमतिगुरुमसहमाना पुनरिव भारावतारणार्थममरलोकमारुरोह रजोमिषेण मही ॥

अथ दन्तिनां दिशि दिशि करविवरविनिःसृतैः शीकरासारैः हेषारवविप्रकीर्णैश्च वाजिनां लालाजललवजालकैरुपशमिते रजसि, पुनरुपजातालोकासु दिक्षु, सागरसलिलादिवोन्मग्नमालोक्य तदपरिमाणं बलम्, उपजातविस्मयः सर्वतो दत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे—"युवराज, किं न जितं देवेन महाराजाधिराजेन तारापीडेन, यज्जेष्यसि । का दिशो न वशीकृताः, या वशीकरिष्यसि । कानि दुर्गाणि न प्रसाधितानि, यानि प्रसाधयिष्यसि । कानि रत्नानि नोपार्जितानि, यान्युपार्जयिष्यसि । कैर्न विरचितः शिरसि बालकमलकुड्मलकोमलः सेवाञ्जलिः ।

कैर्न घृष्टाः पादपीठे चूडामणयः । कैर्न प्रतिपन्ना वेत्रलताः । कैर्नोद्धूतानि चामराणि । कैर्नोच्चारिता जयशब्दाः । एते हि दशरथभगीरथभरतदिलीपालर्कमान्धातृप्रतिमाः कुलाभिमानशालिनः सोमपायिनो मूर्धाभिषिक्ताः पृथिव्यां सर्वपार्थिवाश्चूडामणिपल्लवैरुद्वहन्ति मङ्गल्यां भवच्चरणरजःसंहतिम् । एतानि चाप्यमीषामाप्लावितदशदिगन्तरालानि सैन्यानि भवन्तमुपासते । तथा हि—पश्य पश्य यस्यां यस्यां दिशि विक्षिप्यते चक्षुः, तस्यां तस्यां रसातलमिवोद्गिरति, वसुधेव सूते, ककुभ इव वमन्ति, गगनमिव वर्षति, दिवस इव सृजति बलानि । अपरिमितबलभराक्रान्ता, मन्ये, स्मरति महाभारतसमरसंक्षोभस्याद्य क्षितिः । एष शिखरदेशेषु स्खलितमण्डलो ध्वजान् गणयन्निव कुतूहलाद्भ्रमति कदलिकावनान्तरेषु मयूखमाली । सर्वथा चित्रम्, यन्नाद्य विघटितसकलकुलशैलसंधिबन्धा सहस्रशः शकलीभवति बलभरेण धरित्री, यद्वा बलभरपीडितवसुधाधारणविधुरा न चलन्ति फणिनां पत्युः फणाभित्तयः” इति ॥

एवं वदत एव तस्य युवराजः, तृणमयप्राकारमन्दिरसहस्रसंबाधामुल्लासितधवलपटमण्डपशतशोभिनीमावासभूमिमवाप । तस्यां चावतीर्य राजवत्सर्वाः क्रियाश्चकार । सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानः, तं दिवसमशेषमभिनवपितृवियोगजन्मना शोकवेगेनायास्यमानहृदयः, दुःखेनात्यवाहयत् । अतिवाहितदिवसश्च यामिनीमपि, स्वशयनीयस्य नातिदूरे निहितशयननिषण्णेन वैशम्पायनेन, अन्यतश्च समीपे

क्षितितलविन्यस्तकुथप्रसुप्तया पत्रलेखया सह, अन्तरा पितृसक्तम्, अन्तरा मातृसंबद्धम्, अन्तरा शुकनासमयं कुर्वन्नालापम्, नात्युपजातनिद्रः प्रायेण जाग्रदेव निन्ये । प्रत्यूषे चोत्थाय, तेनैव क्रमेणानवरतप्रयाणकैः, प्रतिप्रयाणकमुपचीयमानेन सेनासमुदायेन जर्जरयन्वसुंधराम्, चूर्णयन्काननानि, समीकुर्वन्विषमाणि प्रातिष्ठत । शनैः शनैश्च स्वेच्छया परिभ्रमन्, नमयन्नुन्नतान्, उन्नमयन्नतान्, आश्वासयन्भीतान्, रक्षन् शरणागतान्, उन्मूलयन् विटपकान्, उत्सादयन्कण्टकान्, अभिषिञ्चन्स्थानस्थानेषु राजपुत्रान्, ससर्जयन्रत्नानि, प्रतीच्छन्नुपायनानि, गृह्णन्करान्, आदिशन्देशव्यवस्थाः, स्थापयन्स्वचिह्नानि, कुर्वन्कीर्तनानि, लेखयन् शासनानि, पूजयन्नग्रजन्मनः, प्रणमन्मुनीन्, पालयन्नाश्रमान्, जनयञ्जनानुरागम्, प्रकाशयन्विक्रमम्, आरोपयन्प्रतापम्, उपचिन्वन्यशः, विस्तारयन्गुणान्, प्रख्यापयन्सच्चरितम्, पृथिवीं विचचार । प्रथमं प्राचीम्, ततस्त्रिशङ्कुतिलकाम्, ततो वरुणलाञ्छनाम्, अनन्तरं सप्तर्षिताराशबलां दिशं विजिग्ये । वर्षत्रयेण चात्मीकृताशेषद्वीपान्तरं सकलमेव चतुरम्भोधिखातवलयपरिखाप्रमाणं बभ्राम महीमण्डलम् । ततः क्रमेणावजितसकलभुवनतलः, प्रदक्षिणीकृत्य वसुधां परिभ्रमन्, कदाचित्कैलाससमीपचारिणां हेमकूटधाम्नां किरातानां सुवर्णपुरं नाम निवासस्थानं नातिविप्रकृष्टं पूर्वजलनिधेर्जित्वा जग्राह । तत्र च निखिलधरणितलपर्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान्दिवसानतिष्ठत् ॥

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य, मृगयानिर्गतो विचरन्

काननम्, शैलशिखरादवतीर्णं यदृच्छया किंनरमिथुनमद्राक्षीत्। अपूर्वदर्शनतया तु समुपजातकुतूहलः कृतग्रहणाभिलाषः, तत्समीपमादरादुपसर्पिततुरंगः समुपसर्पन्, अदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितं च तत्पलायमानमनवरतपार्ष्णिप्रहारद्विगुणीकृतजवेनेन्द्रायुधेनैकाकी निर्गत्य निजबलसमूहात्सुदूरमनुससार। 'अत्र गृह्यते, अत्र गृह्यते, इदं गृहीतम्, इदं गृहीतम्' इत्यतिरभसाकृष्टचेताः, महाजवतया तुरंगमस्य मुहूर्तमात्रेणैकपदमिवासहायस्तस्मात्प्रदेशात्पञ्चदशयोजनमात्रमध्वानं जगाम। तच्चानुबध्यमानं किंनरमिथुनमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह॥

आरूढे च तस्मिन्, शनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिम्, अचलशिखरप्रस्तरप्रतिहतगतिप्रसरो विधृततुरंगमश्चन्द्रापीडः, तस्मिन्काले, समारूढश्रमस्वेदार्द्रशरीरमिन्द्रायुधमात्मानं चावलोक्य, क्षणमिव विचार्य, स्वयमेव विहस्याचिन्तयत्—"किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा किंनरयुगलेन प्रयोजनम्। यदि गृहीतमिदम्, ततः किम्। अथ न गृहीतम्, ततोऽपि किम्। (अहो मे मूर्खतायाः प्रकारः।) अहो यत्किंचनकारितायामादरः। (अहो निरर्थकव्यापारेष्वभिनिवेशः। अहो बालिशचरितेष्वासक्तिः।) साधुफलं कर्म क्रियमाणं वृथा जातम्। अवश्यकर्तव्या क्रिया प्रस्तुता विफलीभूता। राजधर्मः प्रवर्तितो न निष्पन्नः। गुर्वर्थः प्रारब्धो न परिसमाप्तः। विजिगीषुव्यापारः प्रयत्तो न सिद्धः। 'कस्मादहमाविष्ट इवोत्सृष्टनिजपरिवारः, एतावतीं भूमिमायातः। कस्माच्च मया निष्प्रयोजन-

मिदमनुसृतमश्वमुखद्वयम्' इति विचार्यमाणे यत्सत्यमयमात्मैव मे पर इव हासमुपजनयति । न जाने—कियताध्वना विच्छिन्न-मितो बलमनुयायि मे । महाजवो हीन्द्रायुधो निमेषमात्रेणाति-दूरमतिक्रामति । न चागच्छता मया तुरगवेगवशात्किंनरमिथुने बद्धदृष्टिना, अस्मिन्नविरलतरुशतशाखागुल्मलतासंतानगहने निर-न्तरपतितशुष्कपर्णावकीर्णतले महावने पन्था निरूपितः, येन प्रतिनिवृत्य यास्यामि । न चास्मिन्प्रदेशे प्रयत्नेनापि परिभ्रमता मर्त्यधर्मा कश्चिदासाद्यते, यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति। श्रुतं हि मया बहुशः कथ्यमानम्—उत्तरेण सुवर्णपुरं सीमान्त-लेखा पृथिव्याः सर्वजनपदानाम्, ततः परतो निर्मानुषमरण्यम्, तच्चातिक्रम्य कैलासगिरिरिति । अयं च कैलासः । तदिदानीं प्रतिनिवृत्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गी-कृत्य गन्तव्यम् । आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव" इत्यवधार्य, वामकरतलवलितरश्मिपाशः, तुरंगमं व्यावर्तयामास ॥

व्यावर्तिततुरगश्च पुनश्चिन्तितवान्— "अयमुद्भासितप्रभा-भास्वरो भगवान्भानुरधुना दिवसश्रियो रशनामणिरिव नभोम-ध्यमलंकरोति । परिश्रान्तश्चायमिन्द्रायुधः । तदेनं तावदागृहीत-कतिपयदूर्वाप्रवालकवलं कस्मिंश्चित्सरसि स्नातपीतोदकमपनीतश्रमं कृत्वा, स्वयं च सलिलं पीत्वा, कस्यचित्तरोरधश्छायायां मुहूर्त-मात्रं विश्रम्य ततो गमिष्यामि" इति चिन्तयित्वा सलिलमन्वेष-यन्मुहुर्मुहुरितस्ततो दत्तदृष्टिः पर्यटन्, नलिनीजलावगाहोत्थित-

स्याचिरादपक्रान्तस्य च महतो वनगजयूथस्य चरणोत्थापितैः पङ्कपटलैरार्द्रीकृतं मार्गमद्राक्षीत् ॥

उपजातजलाशयशङ्कश्च तं प्रतीपमनुसरन्, उद्ग्रीवदृश्यैरुपरि छत्रमण्डलाकारैः सरलसालसल्लकीप्रायैरविरलैरपि निःशाखतया विरलैरिवोपलक्ष्यमाणैः पादपैरुपेतेन गन्धपाषाणपरिमलामोदिना वेत्रलताप्रतानप्ररूढवेणुना कैलासतलेन कंचिदध्वानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरे दिग्भागेऽत्यायतं तरुखण्डं ददर्श। तं च कमलमधुपानमत्तानां श्रोत्रहारिभिः कलहंसानां कोलाहलैराहूयमान इव प्रविवेश ॥

प्रविश्य च तस्य तरुखण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुंधरादेव्याः, निर्गमनमार्गमिव सागराणाम्, त्रिभुवनपुण्यराशिमिव सरोरूपेणावस्थितम्, वैदूर्यगिरिजालमिव सलिलाकारेण परिणतम्, आपूर्णपर्यन्तमप्यन्तः स्पष्टदृष्टसकलवृत्तान्ततया रिक्तमिवोपलक्ष्यमाणम्, प्रतिमानिभेनान्तःप्रविष्टं सकाननशैलनक्षत्रग्रहंचक्रवालं त्रिभुवनमुद्भिन्नपङ्कजेनोदरेण नारायणमिव बिभ्राणम्, असकृत्पितामहपरिपूरितकमण्डलुपरिपूतजलम्, अनेकशो बालखिल्यकदम्बककृतसंध्योपासनम्, बहुशः सलिलावतीर्णसावित्रीभग्नदेवतार्चनकमलसहस्रम्, सहस्रशः सप्तर्षिमण्डलस्नानपवित्रीकृतम्, क्वचिद्वरुणहंसोपात्तकमलवनमकरन्दम्, क्वचित्त्र्यम्बकवृषभविषाणकोटिखण्डिततटशिलाखण्डम्, क्वचिद्यममहिषशृङ्गशिखरविक्षिप्तफेनपिण्डम्, क्वचिदैरावतदशनमुसलखण्डितकुमुदखण्डम्, अदृष्टान्तम्, अति-

मनोहरम्, आह्लादनं दृष्टेः, अच्छोदं नाम सरो दृष्टवान् ॥

आलोकमात्रेणैवापगतश्रमो दृष्ट्वा मनस्येवमकरोत्—"अहो निष्फलमपि मे तुरगमुखमिथुनानुसरणमेतदालोकयतः सरः सफलतामुपगतम्। अद्य परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम्। आलोकितः खलु रमणीयानामन्तः। दृष्ट आह्लादनीयानामवधिः। वीक्षिता मनोहराणां सीमान्तलेखा। प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः। विलोकिता दर्शनीयानामवसानभूमिः। इदमुत्पाद्य सरःसलिलममृतरसमुत्पादयता वेधसा पुनरुक्ततामिव नीता स्वसृष्टिः। इदमपि खल्वमृतमिव सर्वेन्द्रियाह्लादनसमर्थम्—अतिविमलतया चक्षुषः प्रीतिमुपजनयति। शिशिरतया स्पर्शसुखमुपहरति। कमलसुगन्धितया घ्राणमाप्याययति। हंसमुखरतया श्रुतिमानन्दयति। स्वादुतया रसनामाह्लादयति। नियतं चास्यैव दर्शनतृष्णया न परित्यजति भगवान्कैलासनिवासव्यसनमुमापतिः। न खलु सांप्रतमाचरति जलशयनदोहदं देवो रथाङ्गपाणिः, यदिदममृतरससुरभिसलिलमपहाय, लवणरसपरुषपयस्युदन्वति स्वपिति। नूनं चेदं न प्रथममासीत्सरः, येन प्रलयवराहघोणाभिघातभीता भूतधात्री कलशयोनिपानपरिकलितसकलसलिलं सागरमवतीर्णा; अन्यथा यद्यत्रागाधानेकपातालगम्भीराम्भसि निमग्ना भवेन्महासरसि, किमेकेन महावराहसहस्रैरपि नासादिता भवेत्। नूनं चास्मादेव सलिललेशमादायादाय महाप्रलयेषु प्रलयपयोदाः प्लावयन्ति भुवनान्तराणि। मन्ये च, यत्सृष्टेरर्वाक्सलिलमयं ब्राह्माण्डरूपमादौ भुवनमभूत्,

तदिदं पिण्डीभूय सरोव्यपदेशेनावस्थितम्" इति विचारयन्नेव, तस्य शिलाशकलकर्कशवालुकाप्रायम्, विद्याधरोद्धृतसनालकुमुद-कलापार्चितानेकचारुसैकतलिङ्गम्, दक्षिणं तीरमासाद्य तुरगादवततार ॥

अवतीर्य च व्यपनीतपर्याणमिन्द्रायुधमकरोत्। क्षितितल-लुठितोत्थितं च गृहीतकतिपययवसग्रासं सरोऽवतार्य, पीतसलि-लमिच्छया स्नातं चोत्थाप्य, अन्यतमस्य समीपवर्तिनस्तरोर्मूल-शाखायामपगतखलीनं हस्तपाशशृङ्खलया कनकमय्या चरणौ बद्ध्वा पुनरपि सलिलमवततार। ततश्च प्रक्षालितकरयुगलश्चातक इव कृत्वा जलमयमाहारं सरःसलिलादुदगात्। प्रत्यग्रभग्नशि-शिरैश्च समृणालकैर्जलकणिकाचितैः कमलिनीपलाशैर्लतामण्डप-परिक्षिप्ते शिलातले स्रस्तरमास्तीर्य, निधाय शिरसि पिण्डीकृत-मुत्तरीयम्, निषसाद। मुहूर्तं विश्रान्तश्च, तस्य सरस उत्तरे तीरप्रदेशे समुच्चरन्तम्, उन्मुक्तकबलेन निश्चलश्रवणपुटेन तन्मुखी-भूतेनोद्ग्रीवेणेन्द्रायुधेन प्रथममाकर्णितम्, श्रुतिसुभगं वीणातन्त्री-झंकारमिश्रममानुषं गीतशब्दमशृणोत्। श्रुत्वा च, 'कुतोऽत्र विगतमर्त्यसंपाते प्रदेशे गीतध्वनेः संभूतिः' इति समुपजात-कौतुकः, कमलिनीपत्रस्रस्तरादुत्थाय, तामेव गीतसंपातसूचितां दिशं चक्षुः प्राहिणोत्। अतिदवीयस्तया तु तस्य प्रदेशस्य, प्रयत्न-व्यापृतलोचनोऽपि विलोकयन्न किंचिददर्श। तमेव केवलमन-वरतं गीतशब्दं शुश्राव। कुतूहलवशाच्च गीतध्वनिप्रभवजिज्ञासया कृतगमनबुद्धिः, दत्तपर्याणमिन्द्रायुधमारुह्य, प्रियगीतैः प्रथम-

प्रस्थितैरप्रार्थितैरपि वनहरिणैरुपदिश्यमानवर्त्मा, पश्चिमया सरस्तीरवनलेखया, निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे ॥

क्रमेण च संमुखागतैरच्छनिर्झरजलकणजालजनितजडिमभिः पुण्यैः कैलासमारुतैरभिनन्द्यमानः, गत्वा च तं प्रदेशम्, शुकशतमुखनखशिखरशकलितफलस्फीतैः, जलधरजललुब्धमुग्धचातकध्वानमुखरिततमालखण्डैः, इभकलभकोल्लूनपल्लववेल्लितलवलीवलयैः, अविरलफलनिकरावनतनालिकेरवनैः, अन्तरान्तरा कैलासतरङ्गिणीतरङ्गितसिकतिलतलभूमिभागैः पादपैः परिवृतम्, चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे कैलासपादस्य भूतलभागसंनिविष्टम्, भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत् ॥

तच्च प्रविश्याद्राक्षीत्, चतुःस्तम्भस्फटिकमण्डपिकातलप्रतिष्ठितम्, अमलमुक्ताशिलाघटितलिङ्गम्, अशेषत्रिभुवनवन्दितचरणम्, चराचरगुरुम्, चतुर्मुखम्, भगवन्तं त्र्यम्बकम् ॥)

तस्य च दक्षिणां मूर्तिमाश्रित्याभिमुखीमासीनाम्, उपरचितब्रह्मासनाम्, अतिविस्तारिणा सर्वदिङ्मुखप्लावकेनातिदीर्घकालसंचितेन तपोराशिनेव विसर्पता देहप्रभावितानेन सगिरिकाननं दन्तमयमिव तं प्रदेशं कुर्वतीम्, पञ्चमहाभूतमयमपहाय द्रव्यात्मकमङ्गनिष्पादनोपकरणकलापं धवलगुणेनेव केवलेनोत्पादिताम्, क्षीरोदधिदेवतामिव सहवासपरिचितहरचन्द्रलेखोत्कण्ठाकृष्टाम्, त्रयीमिव कलियुगध्वस्तधर्मशोकगृहीतवनवासाम्, श्वेतद्वीपलक्ष्मीमिवान्यद्वीपावलोकनकुतूहलागताम्, धर्महृदयादिव निर्गताम्, शङ्खादिवोत्कीर्णाम्, मुक्ताफलादिवाकृष्टाम्, इयत्तामिव धवलिम्नः,

जटापाशग्रथितमुत्तमाङ्गेन मणिमयं नामाङ्कमीश्वरचरणद्वयमुद्वहन्तीम्, अयुग्मलोचनसंकाशात्प्रसादलब्धेन चूडामणिचन्द्रमयूखजालेनेव मण्डलीकृतेन ब्रह्मसूत्रेण पवित्रीकृतकायाम्, उत्सङ्गगतां च स्वसुतामिव सूक्ष्मशङ्खखण्डिकाङ्गुलीयकपूरिताङ्गुलिना त्रिपुण्ड्रकावशेषभस्मपाण्डुरेण प्रकोष्ठबद्धशङ्खखण्डकेन दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम्, सुमधुरया च गीत्या देवं विरूपाक्षमुपवीणयन्तीम्, प्रत्यक्षामिव गन्धर्वविद्याम्, निर्ममाम्, निरहंकाराम्, निर्मत्सराम्, अमानुषाकृतिम्, दिव्यत्वादपरिज्ञायमानवयःप्रमाणामप्यष्टादशवर्षदेशीयामिवोपलक्ष्यमाणाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श ॥

ततोऽवतीर्य, तरुशाखायां बद्ध्वा तुरङ्गमम्, उपसृत्य भगवते भक्त्या प्रणम्य त्रिलोचनाय, तामेव दिव्ययोषितमनिमेषपक्ष्मणा निश्चलनिबद्धलक्ष्येण चक्षुषा पुनर्निरूपयामास। उदपादि चास्य तस्या रूपसंपदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि—"अहो जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि। तथा हि—मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरंगमुखमिथुनम्, अयमतिमनोहरो मानवानामगम्यो दिव्यजनसंचरणोचितः प्रदेशो वीक्षितः। अत्र च सलिलमन्वेषयता हृदयहारि सिद्धजनोपस्पृष्टजलं सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता। न हि मे संशीतिरस्या दिव्यतां प्रति। आकृतिरेवानुमापयत्यमानुषताम्। कुतश्च मर्त्यलोके

संभूतिरेवंविधानां गन्धर्वध्वनिविशेषाणाम् । तद्यदि मे सहसा दर्शनपथान्नापयाति, नारोहति वा कैलासशिखरम्, नोत्पतति वा गगनतलम्, ततः 'का त्वम्, किमभिधाना वा, किमर्थं प्रथमे वयसि प्रतिपन्ना व्रतम् ?' इति सर्वमेतदेनामुपसृत्य पृच्छामि । अतिमहानयमवकाश आश्चर्याणाम्" इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायामन्यतमं स्तम्भमाश्रित्य समुपविष्टः, गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ ॥

अथ गीतावसाने सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा, परिवृत्य चन्द्रापीडमाबभाषे—"स्वागतमतिथये । कथमिमां भूमिमनुप्राप्तो महाभागः । तदुत्तिष्ठ । आगम्यताम्, अनुभूयतामतिथिसत्कारः" इति । एवमुक्तस्तु तया संभाषणमात्रेणैवानुगृहीतमात्मानं मन्यमानः, उत्थाय भक्त्या कृतप्रणामः, 'भगवति, यथाज्ञापयसि' इत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज । व्रजंश्च समर्थयामास—"हन्त, तावन्नेयं मां दृष्ट्वा तिरोभूता । कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम् । यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते; तथा संभावयामि नियतमियमखिलमात्मोदन्तमभ्यर्थ्यमाना मया कथयिष्यति" इति । एवं च कृतमतिः पदशतमात्रमिव गत्वा, अन्तःस्थापितमणिकमण्डलुमण्डलाम्, एकान्तावलम्बितयोगपट्टिकाम्, विशाखिकाशिखरनिबद्धनालिकेरीफलवल्कलमयधौतोपानद्युगोपेताम्, शङ्खमयेन भिक्षाकपालेनाधिष्ठिताम्, संनिहितभस्मालाबुकां गुहामद्राक्षीत् । तस्याश्च

द्वारि शिलातले समुपविष्टः, वल्कलशयनशिरोभागविन्यस्तवीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घसलिलमादाय तां कन्यकां समुपस्थिताम्, "अलमतियन्त्रणया। कृतमतिप्रसादेन। भगवति, प्रसीद। विमुच्यतामयमत्यादरः। त्वदीयमालोकनमपि सर्वपापप्रशमनमघमर्षणमिव पवित्रीकरणायालम्। आस्यताम्" इत्यब्रवीत्। अनुबध्यमानश्च तया, तां सर्वामतिथिसपर्यामतिदूरावनतेन शिरसा सप्रश्रयं प्रतिजग्राह ॥

कृतातिथ्यया च तया द्वितीयशिलातलोपविष्टया क्षणमिव तूष्णीं स्थित्वा क्रमेण परिपृष्टः, दिग्विजयादारभ्य किंनरमिथुनानुसरणप्रसङ्गेनागमनमात्मनः सर्वमाचचक्षे। विदितसकलवृत्तान्ता चोत्थाय सा कन्यका, भिक्षाकपालमादाय तेषामायतनतरूणां तलेषु विचचार। अचिरेण तस्याः स्वयंपतितैः फलैरपूर्यत भिक्षाभाजनम्। आगत्य च तेषां फलानामुपभोगाय नियुक्तवती चन्द्रापीडम्। आसीच्च तस्य चेतसि—"नास्ति खल्वसाध्यं नाम तपसाम्। किमतः परमाश्चर्यम्, यदत्र व्यपगतचेतना अपि सचेतना इवास्यै भगवत्यै समतिसृजन्तः फलान्यात्मानुग्रहमुपपादयन्ति वनस्पतयः। चित्रमिदमालोकितमस्माभिरदृष्टपूर्वम्" इत्यधिकतरोपजातविस्मयश्चोत्थाय, तमेव प्रदेशमिन्द्रायुधमानीय, व्यपनीतपर्याणं नातिदूरे संयम्य, निर्झरजलनिर्वर्तितस्नानविधिः, तान्यमृतरसस्वादून्युपभुज्य फलानि, पीत्वा च तुषारशिशिरं प्रस्रवणजलम्, उपस्पृश्यैकान्ते तावदवतस्थे; यावत्तयापि कन्यकया कृतो जलफलमूलमयेष्वाहारेषु प्रणयः ॥

अथ परिसमापिताहारां निर्वर्तितसंध्योचिताचारां शिलातले विस्रब्धमुपविष्टां निभृतमुपसृत्य, नातिदूरे समुपविश्य, मुहूर्तमिव स्थित्वा, चन्द्रापीडः सविनयमवादीत्—"भगवति, त्वत्प्रसादप्राप्तिप्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्मणि नियोजयति । जनयति हि प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः । स्वल्पाप्येकदेशावस्थाने कालकला परिचयमुत्पादयति । अणुरप्युपचारपरिग्रहः प्रणयमारोपयति । तद्यदि नातिखेदकरमिव, ततः कथनेनात्मानमनुग्राह्यमिच्छामि । अतिमहत्खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन्विषये । कतरन्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना । किमर्थं वास्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणम् । क्वेदं वयः । क्वेयमाकृतिः । क्व चायं लावण्यातिशयः । क्वेयमिन्द्रियाणामुपशान्तिः । तदद्भुतमिव मे प्रतिभाति । किंनिमित्तं वानेकसिद्धसाध्यसंबाधानि सुरलोकसुलभान्यपहाय दिव्याश्रमपदानि, एकाकिनी वनमिदममानुषमधिवससि । कश्चायं प्रकारः, यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशीं धवलतां धत्ते शरीरम् । नेदमस्माभिरन्यत्र दृष्टश्रुतपूर्वम् । अपनयतु नः कौतुकम् । आवेदयतु भवती सर्वम्" इत्येवमभिहिता सा, किमप्यन्तर्ध्यायन्ती, तूष्णीं मुहूर्तमिव स्थित्वा, निःश्वस्य, स्थूलस्थूलैरनुबद्धबिन्दुभिरश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे ॥

तां च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणमचिन्तयत्—"अहो दुर्निवारता व्यसनोपनिपातानाम्, यदीदृशीमप्याकृति-

मनभिभवनीयामात्मीयां कुर्वन्ति। सर्वथा न हि कंचन न स्पृशन्ति शरीरधर्माणमुपतापाः। बलवती हि द्वंद्वानां प्रवृत्तिः। इदमपरमधिकतरमुपजनितमतिमहन्मनसि मे कौतुकमस्या बाष्पसलिलपातेन। न ह्यल्पीयसा शोककारणेन क्षेत्रीक्रियन्ते एवंविधा मूर्तयः। न हि क्षुद्रनिर्घातपाताभिहता चलति वसुधा" इति संवर्धितकुतूहलश्च शोकस्मरणहेतुतामुपगतमपराधिनमिवात्मानमवगच्छन्, उत्थाय प्रस्रवणादञ्जलिना मुखप्रक्षालनोदकमुपनिन्ये। सा तु तदनुरोधादविच्छिन्नबाष्पजलधारासंतानापि किंचित्कषायितोदरे प्रक्षाल्य लोचने, वल्कलोपान्तेन वदनमपमृज्य, दीर्घमुष्णं च निःश्वस्य, शनैः प्रत्यवादीत्—"राजपुत्र, किमनेनातिनिर्घृणहृदयाया मम मन्दभाग्यायाः पापाया जन्मनः प्रभृति वैराग्यवृत्तान्तेनाश्रवणीयेन श्रुतेन। तथापि यदि महत्कुतूहलम्, तत्कथयामि। श्रूयताम्—

एतत्प्रायेण कल्याणाभिनिवेशिनः श्रुतिविषयतामापतितमेव—यथा विबुधसद्मन्यप्सरसो नाम कन्यकाः सन्ति। तासां चतुर्दश कुलानि। एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम्। अन्यद्वेदेभ्यः संभूतम्। अन्यदग्नेरुद्भूतम्। अन्यत्पवनात्प्रसूतम्। अन्यदमृतान्मथ्यमानादुत्थितम्। अन्यज्जलाज्जातम्। अन्यदर्ककिरणेभ्यो निर्गतम्। अन्यत्सोमरश्मिभ्यो निष्पतितम्। अन्यद्भूमेरुद्भूतम्। अन्यत्सौदामनीभ्यः प्रवृत्तम्। अन्यन्मृत्युना निर्मितम्। अपरं मकरकेतुना समुत्पादितम्। अन्यत्तु, दक्षस्य प्रजापतेरतिप्रभूतानां कन्यकानां मध्ये द्वे सुते मुनिररिष्टा च

बभूवतुः, ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् । एवमेतान्येकत्र चतुर्दश कुलानि । गन्धर्वाणां तु दक्षात्मजाद्वितयसंभवं तदेव कुलद्वयं जातम् । तत्र मुनेस्तनयश्चित्रसेनादीनां पञ्चदशानां भ्रातॄणामधिको गुणैः षोडशश्चित्ररथो नाम । स किल सर्वेषां गन्धर्वाणामाधिपत्यं शैशव एवाप्तवान् । इतश्च नातिदूरे तस्यास्माद्भारतवर्षादुत्तरेणानन्तरे किंपुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः । तत्र च तद्भुजयुगपरिपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति । तेनैव चेदं चैत्ररथं नामातिमनोहरं काननं निर्मितम् । इदं चाच्छोदाभिधानमतिमहत्सरः खानितम् । अयं च भवानीपतिरुपरचितो भगवान् । अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां सोदर्याणां षण्णां ज्येष्ठो हंसो नाम जगद्विदितो गन्धर्वः, तस्मिन्द्वितीये गन्धर्वकुले गन्धर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान् । अपरिमितगन्धर्वबलपरिवारस्य तस्यापि स एव गिरिरधिवासः । यत्तु तत्सोममयूखसंभूतानामप्सरसां कुलम्, तस्मात्किरणजालानुसारगलितेन सकलेनेव रजनिकरकलाकलापलावण्येन निर्मिता त्रिभुवननयनाभिरामा भगवती द्वितीयेव गौरी गौरीति नाम्ना हिमकरकिरणावदातवर्णा कन्यका प्रसूता । तां च द्वितीयगन्धर्वकुलाधिपतिर्हंसः प्रणयिनीमकरोत् । सा तु हंसेन संयोजिता सदृशसमागमोपजनितामतिमहतीं मुदमुपगतवती । निखिलान्तःपुरस्वामिनी च तस्याभवत् ॥

तयोश्च तादृशयोर्महात्मनोरहमीदृशी विगतलक्षणा शोकाय केवलमनेकदुःखसहस्रभाजनमेकैवात्मजा समुत्पन्ना । तातस्त्वन-

पत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मज्जन्माभिनन्दितवान् । अवाप्ते च दशमेऽहनि कृतयथोचितसमाचारो महाश्वेतेति यथार्थमेव नाम कृतवान् । साहं पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं संचरन्ती, अविदितस्नेहशोकायासमनोहरं शैशवमतिनीतवती । क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन, नवयौवनेन पदम् ॥

अथ विजृम्भमाणनवनलिनवनेषु सकलजीवलोकहृदयानन्ददायकेषु मधुमासदिवसेषु, एकदाहमम्बया सह मधुमासविस्तारितशोभं प्रोत्फुल्लनवनलिनकुमुदकुवलयकह्लारमिदमच्छोदं सरः स्नातुमभ्यागमम् । अत्र च बहुलकुसुमरजःपटलमग्नकलहंसपदलेखमतिरमणीयमिदं तीरतरुतलमिति स्निग्धमनोहरतरोद्देशदर्शनलोभाक्षिप्तहृदया सह सखीजनेन व्यचरम् ॥

एकस्मिंश्च प्रदेशे झटिति वनानिलेनोपनीतम्, निर्भरविकसितेऽपि काननेऽभिभूतान्यकुसुमपरिमलम्, विसर्पन्तम्, अहमहमिकया मधुकरकुलैरनुबध्यमानम्, अनाघ्रातपूर्वममानुषलोकोचितं कुसुमगन्धमभ्यजिघ्रम् । 'कुतोऽयम्' इत्युपारूढकुतूहला चाहं मुकुलितलोचना तेन कुसुमगन्धेन मधुकरीवाकृष्यमाणा कतिचित्पदानि गत्वा, हरहुताशनेन्धनीकृतमदनशोकविधुरं वसन्तमिव तपस्यन्तम्, अतितेजस्वितया प्रचलतटिल्लतापञ्जरमध्यगतमिव विभाव्यमानम्, एकेन सनालवकुलफलाकारं कमण्डलुम्, अपरेण च स्फटिकाक्षमालिकां करेण कलयन्तम्, आत्मतेजसा

विजित्य सवितारमागृहीतेन परिवेषमण्डलेनेव मौञ्जमेखलागुणेन परिक्षिप्तजघनभागम्, अलंकारमिव ब्रह्मचर्यस्य, यौवनमिव धर्मस्य, विलासमिव सरस्वत्याः, स्वयंवरपतिमिव सर्वविद्यानाम्, संकेतस्थानमिव सर्वश्रुतानाम्, आत्मानुरूपेण सवयसा परेण देवतार्चनकुसुमान्युच्चिन्वता तापसकुमारेणानुगतम्, अतिमनोहरं स्नानार्थमागतं मुनिकुमारकमपश्यम् ॥

तेन च कर्णावतंसीकृतां कृत्तिकातारास्तबकानुकारिणीमदृष्टपूर्वां कुसुममञ्जरीमद्राक्षम् । अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमल इति मनसा निश्चित्य तं तपोधनयुवानमीक्षमाणाहमचिन्तयम्—"अहो रूपातिशयनिष्पादनोपकरणकोशस्याक्षीणता विधातुः । यत्त्रिभुवनाद्भुतरूपसंभारं भगवन्तं कुसुमायुधमुत्पाद्य, तदाकारातिरिक्तरूपराशिरयमपरो मुनिमायामयो मकरकेतुरुत्पादितः । मन्ये च, सकलजगन्नयनानन्दकरं शशिबिम्बं विरचयता, लक्ष्मीलीलावासभवनानि कमलानि सृजता, प्रजापतिना प्रथममेतदाननाकारकरणकौशलाभ्यास एव कृतः । अन्यथा किमिव हि सदृशवस्तुविरचनायाः कारणम् । अलीकं चेदम्, यथा किल—सकलाः कलाः कलावतो बहुलपक्षे क्षीयमाणस्य सुषुम्नानाम्ना रश्मिना रविरापिबतीति । मन्ये—ताः खल्वस्य गभस्तयः समस्ता वपुरिदमाविशन्तीति । कुतोऽन्यथा रूपापहारिणि क्लेशबहुले तपसि वर्तमानस्येदं लावण्यम्" इति विचिन्तयन्तीमेव मामविचारितगुणदोषविशेषो रूपैकपक्षपाती नवयौवनसुलभः कुसुमायुधः परवशामकरोत् ॥

उच्छ्वसितैः सह विस्मृतनिमेषेण किंचिदामुकुलितपक्ष्मणा दक्षिणेन चक्षुषा सस्पृहमापिबन्तीव, किमपि याचमानेव, हा हा किमिदमसांप्रतमतिह्रेपणमकुलकुमारीजनोचितमिदं मया प्रस्तुतमिति जानानाप्यप्रभवन्ती करणानाम्, स्तम्भितेव, लिखितेव, केनापि विधृतेव, निस्पन्दसकलावयवा तमतिचिरं व्यलोकयम्। अनन्तरं च मेऽन्तर्मदनावकाशमिव दातुमाहितसंताना निरीयुः श्वासमरुतः। स्वेदसलिललवलेखाक्षालितेवागलल्लज्जा ॥

आसीच्च मम मनसि—"शान्तात्मनि दूरीकृतविषयव्यतिकरेऽस्मिञ्जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन। एवं च नामातिमूढं हृदयमङ्गनाजनस्य। यदनुरागविषययोग्यतामपि विचारयितुं नालम्। क्वेदमतिभास्वरं धाम तेजसां तपसां च। क्व च प्राकृतजनाभिनन्दितानि मन्मथपरिस्पन्दितानि। नियतमयं मामेवं मकरलाञ्छनेन विडम्ब्यमानामुपहसति मनसा। चित्रं चेदम्—यदहमेवमवगच्छन्त्यपि न शक्नोम्यात्मनो विकारमुपसंहर्तुम्। कथमनेन क्षणेनाकारमात्रालोकनाकुलीभूतमेवमस्वतन्त्रतामुपैत्यन्तःकरणम्। यावदेव सचेतनास्मि, यावदेव च न परिस्फुटमनेन विभाव्यते मे मदनदुश्चेष्टितलाघवमेतत्, तावदेवास्मात्प्रदेशादपसर्पणं श्रेयः। कदाचिदनभिमतस्मरविकारदर्शनकुपितोऽयं शापाभिज्ञां करोति माम्। अदूरकोपा हि मुनिजनप्रकृतिः" इत्यवधार्य, अपसर्पणाभिलाषिण्यहमभवम्। अशेषजनपूजनीया चेयं जातिरिति कृत्वा तस्मै प्रणाममकरवम् ॥

अथ कृतप्रणामायां मयि, दुर्लङ्घशासनतया भगवतो मनोभुवः, अविनयबहुलतया चाभिनवयौवनस्य, चपलतया च मनोवृत्तेः, तथा भवितव्यतया च तस्य तस्य वस्तुनः, किं बहुना, मम मन्दभाग्यदौरात्म्यात्, अस्य चेदृशस्य क्लेशस्य विहितत्वात्, तमपि मद्विकारदर्शनापहृतधैर्यं प्रदीपमिव पवनस्तरलतामनयदनङ्गः। तया तु तस्यातिप्रकटया विकृत्या द्विगुणीकृतमदनावेशा, तत्क्षणमहमवर्णनयोग्यां कामप्यवस्थामन्वभवम् ॥

प्राप्तप्रसरा चोपसृत्य तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्—"भगवन्, किमभिधानः? कस्य चायं तपोधनयुवा? किंनाम्नस्तरोरियमनेनावतंसीकृता कुसुममञ्जरी? जनयति हि मे मनसि महत्कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोऽयमनाघ्रातपूर्वो गन्धः" इति। स तु मामीषद्विहस्याब्रवीत्—"बाले, किमनेन पृष्टेन प्रयोजनम्। अथ कौतुकमावेदयामि। श्रूयताम्—

अस्ति खलु सकलत्रिभुवनप्रख्यातकीर्तिः, महामुनिर्दिव्यलोकनिवासी श्वेतकेतुर्नाम। तस्य च कदाचिद्देवतार्चनकमलान्युद्धर्तुं मन्दाकिनीमवतरतस्त्रिभुवनसुन्दरं रूपमास्वादयन्त्या मन्मथविकृताया विकचपुण्डरीकोपविष्टाया देव्या लक्ष्म्याः सद्य एव कुमार एष समुदपादि। ततस्तमुत्सङ्गेनादाय सा 'भगवन्, गृहाण, तवायमात्मजः' इत्युक्त्वा तस्मै श्वेतकेतवे ददौ। असावपि बालजनोचिताः सर्वाः क्रियाः कृत्वा, तस्य पुण्डरीकसंभवतया तदेव पुण्डरीक इति नाम चक्रे। प्रतिपादितव्रतं च तमागृहीतसकलविद्याकलापमकार्षीत्। सोऽयम् ॥

इयं च, सुरासुरैर्मथ्यमानात्क्षीरसागरादुद्गतो यः पारिजात-नामा पादपः, तस्य मञ्जरी। यथा चैषा व्रतविरुद्धमस्य श्रवणसंसर्ग-मासादितवती, तदपि कथयामि । अद्य चतुर्दशीति भगवन्तम-म्बिकापतिं कैलासगतमुपासितुममरलोकान्मया सह नन्दनवन-समीपेनायमनुसरन्, निर्गत्य साक्षान्नन्दनवनदेवतया पारिजात-कुसुममञ्जरीमिमामादाय, प्रणम्याभिहितः—'भगवन्, इयमवतं-सविलासदुर्ललिता समारोप्यतां श्रवणशिखरम्। व्रजतु सफलतां जन्म पारिजातस्य' इत्येवमभिदधानां तामनुयान्तीमालोक्य, 'को दोषः सखे, क्रियतामस्याः परिग्रहः' इत्यभिधाय बलादियमनि-च्छतोऽप्यस्य मया कर्णपूरीकृता । तदेतत्कार्त्स्न्येन, योऽयम्, या चेयम्, यथा चास्य श्रवणशिखरं समारूढा, तत्सर्वमावेदितम्" इत्युक्तवति तस्मिन्, स तपोधनयुवा किंचिदुपदर्शितस्मितो माम-वादीत्—'अयि कुतूहलिनि, किमनेन प्रश्नायासेन । यदि रुचित-सुरभिपरिमला, गृह्यतामियम्' इत्युक्त्वा समुपसृत्य, आत्मीया-च्छ्रवणादपनीय मदीये श्रवणपुटे तामकरोत्। स च मत्कपोल-स्पर्शतरलीकृताङ्गुलिजालकात्करतलादक्षमालां लज्जया सह गलि-तामपि नाज्ञासीत् । अथाहं तामसंप्राप्तामेव भूतलमक्षमालां गृहीत्वा, सलीलं कण्ठाभरणतामनयम् ॥

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचत्—'भर्तृदा-रिके, स्नाता देवी। प्रत्यासीदति गृहगमनकालः । तत्क्रियतां मज्जनविधिः' इति । अहं तु तेन तस्या वचनेन नवग्रहा करि-णीव प्रथमाङ्कुशपातेनानिच्छया कथं कथमपि समाकृष्यमाणा

तन्मुखादतिकृच्छ्रेण दृष्टिमाकृष्य स्नातुमुदचलम् ॥

उच्चलितायां च मयि द्वितीयो मुनिदारकस्तथाविधं तस्य धैर्यस्खलितमालोक्य किंचित्प्रकटितप्रणयकोप इवावादीत्—"सखे पुण्डरीक, नैतदनुरूपं भवतः । क्षुद्रजनक्षुण्ण एष मार्गः । धैर्यधना हि साधवः । किं यः कश्चित्प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि । कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवः, येनास्येवं-कृतः । क्व ते तद्धैर्यम् । कासाविन्द्रियजयः । क्व सा प्रशान्तिः । क्व तत्कुलक्रमागतं ब्रह्मचर्यम् । क्व ते गुरूपदेशाः । क्व तानि श्रुतानि । क्व ता वैराग्यबुद्धयः । कासौ तपस्यभिनिवेशः । क्व तद्यौवनानुशासनम् । सर्वथा निष्फला प्रज्ञा । निर्गुणो धर्मशास्त्राभ्यासः । निरर्थकः संस्कारः । निरुपकारको गुरूपदेशविवेकः । निष्प्रयोजना प्रबुद्धता । निष्कारणं ज्ञानम् । यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते, प्रमादैश्चाभिभूयन्ते । कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि । अहो विगतचेतनत्वम् । अपहृता नामेयम् । इदमपि तावदपह्रियमाणमनयानार्यया निवार्यतां हृदयम्" ॥

इत्येवमभिधीयमानश्च तेन किंचिदुपजातलज्ज इव प्रत्यवादीत्—'सखे कपिञ्जल, किं मामन्यथा संभावयसि । नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम्' इत्यभिधाय, अलीककोपकान्तेन मुखेन्दुना मामवदत्—'चपले, प्रदेशादस्मादिमामक्षमालामदत्त्वा पदात्पदमपि न गन्तव्यम्' इति । तच्च श्रुत्वा, अहमात्मकण्ठादुन्मुच्यैकावलीम्, 'भगवन्,

गृह्यतामक्षमाला' इति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारिते पाणौ निधाय, स्नातुमवातरम् । उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रतीपं नीयमाना सखीजनेन बलादम्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम् ॥

गत्वा च प्रविश्य कन्यकान्तःपुरम्, ततः प्रभृति तद्विरहविधुरा, किमागतास्मि, किं तत्रैव स्थितास्मि, किमेकाकिन्यस्मि, किं परिवृतास्मि, किं तूष्णीमस्मि, किं प्रस्तुतालापास्मि, किं जागर्मि, किं सुप्तास्मि, कानि रम्याणि, कान्यरम्याणीति सर्वमेव नावागच्छम् । अविज्ञातमदनवृत्तान्ता च, क्व गच्छामि, किं करोमि, किं शृणोमि, किं पश्यामि, किमालपामि, कस्य कथयामि, कोऽस्य प्रतीकार इति सर्वं च नाज्ञासिषम् । केवलमारुह्य कुमारीपुरप्रासादम्, विसर्ज्य च सखीजनम्, द्वारि निवारिताशेषपरिजनप्रवेशा, सर्वव्यापारानुत्सृज्य, एकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी, तामेव दिशं तत्सनाथतया प्रसाधितामिव पूर्णचन्द्रोदयालंकृतामिव दर्शनसुभगामीक्षमाणा, तस्माद्दिगन्तरादागच्छन्तमनिलमपि वनकुसुमपरिमलमपि शकुनिध्वनिमपि तद्वार्तां प्रष्टुमीहमाना, तद्वल्लभतया तपःक्लेशायापि स्पृहयन्ती, तत्परिग्रहान्मुनिवेषस्याग्राम्यतां तच्छ्रवणसंपर्कात्पारिजातकुसुमस्य मनोहरतां तन्निवासात्सुरलोकस्य रम्यतामध्यारोपयन्ती, दूरस्थस्यापि कमलिनीव सवितुस्तस्यैवाभिमुखी, तथैव तामक्षावलीं कण्ठेनोद्वहन्ती, तथैव च तया कर्णलग्नया पारिजातमञ्जर्या कण्टकितैककपोलफलका, निस्पन्दमतिष्ठम् ॥

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सह गता स्नातुमासीत् । सा च पश्चाच्चिरादिवागत्य, तथावस्थितां शनैर्मामवादीत्—“भर्तृदारिके, यौ तौ तापसकुमारकौ दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ, तयोरेकः, येन भर्तृदुहितुरियमवतंसीकृता सुरतरुकुसुममञ्जरी, स तस्माद्द्वितीयादात्मनो रक्षन् दर्शनम्, अतिनिभृतपदः, कुसुमितलतासंतानगहनान्तरेणोपसृत्य मामागच्छन्तीं पृष्ठतः, भर्तृदारिकामुद्दिश्याप्राक्षीत्—‘बालिके, केयं कन्यका, कस्य वापत्यम्, किमभिधाना, क्व गच्छति’ इति । मयोक्तम्—‘एषा खलु गन्धर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम गन्धर्वाधिवासं हेमकूटाचलमभिप्रस्थिता’ इति कथिते च मया, किमपि चिन्तयन्मुहूर्तमिव तूष्णीं स्थित्वा, विगतनिमेषेण चक्षुषा चिरमभिवीक्षमाणो माम्, सानुनयमर्थितामिव दर्शयन् पुनराह—‘बालिके, कल्याणिनी तवाविसंवादिन्यचपला बालभावेऽप्याकृतिरियम् । तत्करोषि मे वचनमेकमभ्यर्थ्यमाना’ इति । ततो मया सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः—‘भगवन्, कस्मादेवमभिधत्से । काहम् । महात्मानः सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु दृष्टिमपि न पातयन्ति, किं पुनराज्ञाम् । तद्विस्रब्धमादिश्यतां कर्तव्यम् । अनुगृह्यतामयं जनः’ इत्येवमुक्तश्च मया सस्नेहया, सखीमिवोपकारिणीमिव प्राणप्रदामिव दृष्ट्या मामभिनन्द्य, निकटवर्तिनस्तमालपादपात्पल्लवमादाय, निष्पीड्य शिलातले, तेन रसेनोत्तरीयवल्कलैकदेशाद्विपाट्य पट्टिकां स्वहस्त-

कमलकनिष्ठिकानखशिखरेणाभिलिख्य, 'इयं पत्रिका त्वया तस्यै कन्यकायै प्रच्छन्नमेकाकिन्यै देया' इत्यभिधायार्पितवान्" इत्युक्त्वा च सा, ताम्बूलभाजनादाकृष्य तामदर्शयत्। अहं तु तस्याः करतलादादाय तां वल्कलपट्टिकां तस्यामिमामभिलिखितामार्यामपश्यम्—

दूरं मुक्तालतया बिसासितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥

अनया च मे दृष्ट्या दोषविकारोपचयः सुतरामक्रियत मनसः, येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यागमम्। तां च द्वितीयदर्शनेन समासादितत्रैलोक्यराज्याभिषेकामिव मन्यमाना, कपोलयोरलकलताभङ्गेषु च सोपग्रहं स्पृशन्ती, विपरीतमिव परिजनस्वामिसंबन्धमुपदर्शयंन्ती, "तरलिके, कथय कथं स त्वया दृष्टः, किं किमभिहितासि तेन, कियन्तं कालमवस्थितासि तत्र, कियदनुसरन्नस्मानसावागतः" इति पुनः पुनः पर्यपृच्छम्। अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम् ॥

अथ लोहितायति गगनतलोपान्तावलम्बिनि रविबिम्बे, मुकुलितरक्तपङ्कजपुटप्रविष्टमधुकरावलीषु रविविरहमूर्च्छान्धकारितहृदयास्विव प्रारब्धनिमीलनासु पद्मिनीषु, सा छत्रग्राहिणी समागत्याकथयत्—'भर्तृदारिके, तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति, कथयति च—अक्षमालामुपयाचितुमागतोऽस्मि' इति ॥

अहं तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव

द्वारदेशम्, समुपजाततदागमनाशङ्का समाहूयान्यतमं कञ्चुकिनम् 'गच्छ, प्रवेश्यताम्' इत्यादिश्य प्राहिणवम् ॥

अथ मुहूर्तादिव तं तस्य मकरकेतनस्येव वसन्तसमयम्, वसन्तसमयस्येव दक्षिणानिलम्, अनुरूपं सखायमृषिकुमारकं कपिञ्जलनामानमागच्छन्तमपश्यम् । अन्तिकमुपगतस्य चास्य पर्याकुलमिव शून्यमिवाकारमलक्षयम् । उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम् । उपविष्टस्य च बलादनिच्छतोऽपि प्रक्षाल्य चरणौ उपमृज्योत्तरीयांशुकपल्लवेन, अव्यवधानायां भूमावेव तस्यान्तिके समुपाविशम् । अथ मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव, स तस्यां मत्समीपोपविष्टायां तरलिकायां चक्षुरपातयत् । अहं तु विदिताभिप्राया दृष्ट्वैव 'भगवन्, अव्यतिरिक्तेयमस्मच्छरीरात् । अशङ्कितमभिधीयताम्' इत्यवोचम् ॥

एवमुक्तश्च मया कपिञ्जलः प्रत्यवादीत्—"राजपुत्रि, किं ब्रवीमि । वागेव मे नाभिधेयविषयमवतरति त्रपया । क्व कन्दमूलफलाशी शान्तो वननिरतो मुनिजनः । कायमनुपशान्तजनोचितो विषयोपभोगाभिलाषकलुषो रागप्रायः प्रपञ्चः । सर्वमेवानुपपन्नम् । आलोकय, किमारब्धं दैवेन । अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम् । न जाने किमिदं वल्कलानां सदृशम् । उताहो जटानां समुचितम् । किं तपसोऽनुरूपम् । आहोस्विद्धर्मोपदेशाङ्गमिदम् । अपूर्वेयं विडम्बना । केवलमवश्यकथनीयमिदम् । अपर उपायो न दृश्यते । अन्या प्रतिक्रिया नोपलभ्यते । अन्यच्छरणं नालोक्यते । अन्या गतिर्नास्ति ।

अकथ्यमाने च, महाननर्थोपनिपातो जायते । प्राणपरित्यागेनापि रक्षणीयाः सुहृदसव इति कथयामि ॥

अस्ति—भवत्याः समक्षमेव स मया तथा निष्ठुरमुपदर्शित-कोपेनाभिहितः । तथा चाभिधाय परित्यज्य तम्, तस्मात्प्रदेशा-दुपजातमन्युः, उत्सृष्टकुसुमावचयः, अन्यं प्रदेशमगमम् । अपया-तायां भवत्यां मुहूर्तमिव स्थित्वा, 'एकाकी किमयमिदानीमाचरति' इति संजातवितर्कः, प्रतिनिवृत्य, विटपान्तरितविग्रहः, तं प्रदेशं व्यलोकयम् । यावत्तत्र तं नाद्राक्षम्, आसीच्च मे मनस्येवम्—'किंनु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन् गतो भवेत्? गतायां च तस्यां लब्धचेतनो लज्जमानो न शक्नोति मे दर्शनपथमुपगन्तुम्? आहोस्वित्कुपितः परित्यज्य मां गतः? उतान्वेषयन्मामेव प्रदेश-मन्यमितः समाश्रितः स्यात्?' इत्येवं विकल्पयन्, कंचित्काल-मतिष्ठम् । तेन तु जन्मनः प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूयमानः पुनरचिन्तयम्—'स कदाचिद्धैर्यस्खलनविलक्षः किंचिद-निष्टमपि समाचरेत् । न हि किंचिन्न क्रियते ह्रिया । तन्न युक्तमे-नमेकाकिनं कर्तुम्' इत्यवधार्य, अन्वेष्टुमादरमकरवम् । अन्वेषयंश्च यथा यथा नापश्यं तम्, तथा तथा सुहृत्स्नेहकातरेण मनसा तत्त-दशोभनमाशङ्कमानः, तरुलतागहनानि चन्दनवीथिकालतामण्डपान् सरःकूलानि च वीक्षमाणः, निपुणमितस्ततो दत्तदृष्टिः, सुचिरं व्यचरम् ॥

अथैकस्मिन्सरःसमीपवर्तिनि निरन्तरतया कुसुममय इव मधुकरमय इव परभृतमय इव मयूरमय इवातिमनोहरे वसन्त-

जन्मभूमिभूते लतागहने कृतावस्थानम्, उत्सृष्टसकलव्यापारतया लिखितमिव उत्कीर्णमिव स्तम्भितमिव उपरतमिव प्रसुप्तमिव योगसमाधिस्थमिव निश्चलमपि स्ववृत्ताच्चलितम्, शापप्रदानभयादिवादत्तदर्शनेन कुसुमायुधेन संताप्यमानम्, अतिनिस्पन्दतया हृदयनिवासिनीं प्रियां द्रष्टुमन्तःप्रविष्टैरिवासह्यसंतापसंत्रासप्रलीनैरिव मनःक्षोभप्रकुपितैरिवोन्मुच्य गतैरिन्द्रियैः शून्यीकृतशरीरम्, निस्पन्दनिमीलितेनेक्षणयुगलेन बाष्पजलदुर्दिनमुत्सृजन्तम्, अलिनिवहनिपीयमानपरिमलैरुपरि पतद्भिश्चम्पककुड्मलैस्तप्तशरशल्यकैरिव सधूमैः कुसुमशरेण ताड्यमानम्, प्रभातचन्द्रमिव पाण्डुतया परिगृहीतम्, निदाघगङ्गाप्रवाहमिव कृशिमानमागतम्, अन्तर्गतानलं चन्दनविटपमिव म्लायन्तम्, अन्यमिव, अदृष्टपूर्वमिव, अपरिचितमिव, जन्मान्तरमिवोपगतम्, परां कोटिमधिरूढं मन्मथावेशस्य, अनभिज्ञेयपूर्वाकारं तमहमद्राक्षम् ॥

अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुपजातविषादो वेपमानेन हृदयेनाचिन्तयम्—'एवं नामायमतिदुर्विषहवेगो मकरकेतुः । येनानेन क्षणेनायमीदृशमवस्थान्तरमप्रतीकारमुपनीतः । कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः । अहो बत महच्चित्रम् । तथा नामायमा शैशवाद्धीरप्रकृतिरस्खलितवृत्तिर्मम चान्येषां च मुनिकुमारकाणां स्पृहणीयचरित आसीत् । अद्य त्वितर इव परिभूय ज्ञानम्, अविगणय्य तपःप्रभावम्, उन्मूल्य गाम्भीर्यम्, मन्मथेन जडीकृतः । सर्वथा दुर्लभं यौवनमस्खलितम्' इति । उपसृत्य च तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्य,

अंसदेशावसक्तपाणिः, तमनुन्मीलितलोचनमेव 'सखे पुण्डरीक, कथय किमिदम्' इत्यपृच्छम् ॥

अथ सुचिरसंमीलनालग्नमिव कथमपि प्रयत्नेनानवरतरोदनवशादुपजातारुणभावमश्रुजलपटलपूरप्लावितमुत्कुपितमिव सवेदनमिव स्वच्छांशुकान्तरितरक्तकमलवनच्छायं चक्षुरुन्मील्य, मन्थरया दृष्ट्या सुचिरं विलोक्य माम्, आयततरं निश्वस्य लज्जाविशीर्यमाणविरलाक्षरम्, 'सखे कपिञ्जल, विदितवृत्तान्तोऽपि किं मां पृच्छसि' इति कृच्छ्रेण शनैः शनैरवदत्। अहं तु तदाकर्ण्य, तदवस्थयैव, 'अप्रतीकारविकारोऽयम्, तथापि सुहृदा सुहृदसन्मार्गप्रवृत्तो यावच्छक्ति सर्वात्मना निवारणीयः' इति मनसावधार्य, अब्रवम्—'सखे पुण्डरीक, सुविदितमेतन्मम। केवलमिदमेव पृच्छामि। यदेतदारब्धं भवता, किमिदं गुरुभिरुपदिष्टम्? उत धर्मशास्त्रेषु पठितम्? उत धर्मार्जनोपायोऽयम्? उतापरस्तपसां प्रकारः? उत स्वर्गगमनमार्गोऽयम्? उत व्रतरहस्यमिदम्? उत मोक्षप्राप्तियुक्तिरियम्? आहोस्विदन्यो नियमप्रकारः? कथमेतद्युक्तं भवतो मनसापि चिन्तयितुम्, किं पुनराख्यातुमीक्षितुं वा। किमप्रबुद्ध इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे। मूढो हि मदनेनायास्यते। का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु भवतः। स खलु धर्मबुद्ध्या विषलतावनं सिञ्चति, कुवलयमालेति निस्त्रिंशलतामालिङ्गति, कृष्णागरुधूमलेखेति कृष्णसर्पमवगूहते, रत्नमिति ज्वलन्तमङ्गारमभिस्पृशति, मूढो विषयोपभोगेष्वनिष्टानु-

बन्धिषु यः सुखबुद्धिमारोपयति । अधिगतविषयतत्त्वोऽपि कस्मात्खद्योत इव ज्योतिर्निर्वीर्यमिदं ज्ञानमुद्वहसि । यतो न निवारयसि प्रबलरजःप्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि, न नियमयसि च क्षुभितं मनः । कोऽयमनङ्गो नाम । धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचारः' इत्येवं वदत एव मे वचनमाक्षिप्य, प्रतिपक्ष्मान्तरालप्रवृत्तबाष्पवेणिकं प्रमृज्य चक्षुः, करतलेन पाणौ मामवलम्ब्य, अवोचत्—'सखे किं बहुनोक्तेन । सर्वथा स्वस्थोऽसि । आशीविषविषवेगविषमाणामेतेषां कुसुमचापसायकानां पतितोऽसि न गोचरे । सुखमुपदिश्यते परस्य । यस्य चेन्द्रियाणि सन्ति, मनो वा विद्यते, यः पश्यति वा, शृणोति वा, श्रुतमवधारयति वा, यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलम्, स खलूपदेशमर्हति । मम तु सर्वमेवेदमतिदूरापेतम् । कथमप्येवमेवायत्नविधृतास्तिष्ठन्त्यसवः । दूरातीतः खलूपदेशकालः । समतिक्रान्तो धैर्यावसरः । गता प्रतिसंख्यानवेला । अतीतो ज्ञानावष्टम्भसमयः । केन वान्येनास्मिन्समये भवन्तमपहायोपदेष्टव्यम्, उन्मार्गप्रवृत्तिनिवारणं वा करणीयम् । कस्य वान्यस्य वचसि मया स्थातव्यम् । को वापरस्त्वत्समो मे जगति बन्धुः । किं करोमि, यन्न शक्नोमि निवारयितुमात्मानम् । इयमनेनैव क्षणेन भवता दृष्टा दुष्टावस्था । तद्गत इदानीमुपदेशकालः । यावत्प्राणिमि, तावदस्य मदनसंतापस्य प्रतिक्रियां क्रियमाणामिच्छामि । पच्यन्त इव मेऽङ्गानि । उत्क्वथ्यत इव हृदयम् । प्लुष्यत इव दृष्टिः । ज्वलतीव शरीरम् । अत्र यत्प्राप्त-

कालम्, तत्करोतु भवान्' इत्यभिधाय तूष्णीमभवत् ॥

एवमुक्तोऽप्यहमेनं प्राबोधयं पुनः पुनः। यदा शास्त्रोपदेश-विशदैः सनिदर्शनैः सेतिहासैश्च वचोभिः सानुनयं सोपग्रहं चाभिधीयमानोऽपि नाकरोत्कर्णे, तदाहमचिन्तयम्—'अति-भूमिमयं गतो न शक्यते निवर्तयितुम्। इदानीं निरर्थकाः खलू-पदेशाः। तत्प्राणपरिरक्षणेऽपि तावदस्य यत्नमाचरामि' इति कृत-मतेः, मुहुर्मुहुरन्यदन्यन्नलिनदलशयनमुपकल्पयतः, मुहुर्मुहुश्च-न्दनचर्चामारचयतः, मुहुर्मुहुश्च स्वेदप्रतिक्रियां कुर्वतः, कदली-दलेनानवरतं वीजयतः, समुदभून्मे मनसि चिन्ता—'नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः। क्वायं हरिण इव वनवास-निरतः स्वभावमुग्धो जनः। क्व च विविधविलासरसराशि-र्गन्धर्वराजपुत्री महाश्वेता। सर्वथा न हि किंचिदस्य दुर्घटं दुष्करमनायत्तमकर्तव्यं वा जगति। दुरुपपादेष्वप्यर्थेष्वयमव-ज्ञया विचरति। नायं केनापि प्रतिकूलयितुं शक्यते। का वा गणना सचेतनेषु। अपगतचेतनान्यपि संघटयितुमलम्। यद्यस्मै रोचते, कुमुदिन्यपि दिनकरकरानुरागिणी भवति। कमलिन्यपि शशिकरद्वेषमुज्झति। निशापि वासरेण सह मिश्रतामेति। ज्यो-त्स्नाप्यन्धकारमनुवर्तते। किं वा तस्य दुःसाधमपरम्। एवंविधो येनायमगाधगाम्भीर्यसागरस्तृणवल्लघुतामुपनीतः। क्व तत्तपः। क्वेयमवस्था। सर्वथा निष्प्रतीकारेयमापदुपस्थिता। किमिदानीं कर्तव्यम्। किं वा चेष्टितव्यम्। कां दिशं गन्तव्यम्। किं शर-णम्। को वोपायः। कः सहायः। कः प्रकारः। का युक्तिः।

कः समाश्रयः । येनास्यासवः संधार्यन्ते । केन वा कौशलेन, कतमया वा युक्त्या, कतरेण वा प्रकारेण, केन वावष्टम्भेन, कया वा प्रज्ञया, कतमेन वा समाश्वासनेन, अयं जीवेत्' इत्येते चान्ये च मे विषण्णहृदयस्य संकल्पाः प्रादुरासन् ॥

पुनश्चाचिन्तयम् —'किमनया ध्यातया निष्प्रयोजनया चिन्तया । प्राणास्तावदस्य येन केनचिदुपायेन शुभेनाशुभेन वा रक्षणीयाः । तेषां च तत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः । बालभावादप्रगल्भतया च तपोविरुद्धमनुचितमुपहासमिवात्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नायं तस्याः स्वयमभिगमनेन पूरयति मनोरथम् । अकालान्तरक्षमश्चायमस्य मदनविकारः । सततमतिगर्हितेनाकृत्येनापि रक्षणीयान्मन्यन्ते सुहृदसून्साधवः । तदतिह्रेपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यतामापतितम् । किं चान्यत्क्रियते । का चान्या गतिः । सर्वथा प्रयामि तस्याः सकाशम् । आवेदयाम्येतामवस्थाम्' इति चिन्तयित्वा, कदाचिदनुचितव्यापारप्रवृत्तं मां विज्ञाय संजातलज्जो निवारयेदित्यनिवेद्यैव तस्मै, तत्प्रदेशात्सव्याजमुत्थायागतोऽहम् । तदेवमवस्थिते यदत्रावसरप्राप्तम्, ईदृशस्य चानुरागस्य सदृशम्, अस्मदागमनस्य चानुरूपम्, आत्मनो वा समुचितम्, तत्र प्रभवति भवती" इत्यभिधाय, किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत् ॥

अहं तु तदाकर्ण्य, सुखामृतमये ह्रद इव निमग्ना, सर्वानन्दानामुपरि वर्तमाना, सर्वमनोरथानामग्रमिवाधिरूढा, तत्का-

लोपजातया लज्जया किंचिदवनम्यमानवदनत्वादस्पृष्टकपोलोदरैरानन्दबाष्पजलबिन्दुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसङ्गा तत्क्षणमचिन्तयम्—"दिष्ट्या तावदयमनङ्गो मामिव तमप्यनुबध्नाति। यत्सत्यमेतेन मे संतापयताप्यंशेन दर्शितानुकूलता। यदि च सत्यमेव तस्येदृशी दशा वर्तते, ततः किमिव नोपकृतमनेन। किं वा नोपपादितम्। को वानेनापरः समानो बन्धुः। कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भारती प्रशान्ताकृतेरस्माद्वदनान्निष्क्रामति। इत्थंभूते किं मयापि प्रतिपत्तव्यम्" इत्येवं विचारयन्तीमेव प्रविश्य ससंभ्रमा प्रतीहारी मामकथयत्—'भर्तृदारिके, त्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्ता' इति। तच्च श्रुत्वा कपिञ्जलो महाजनसंमर्दभीरुः सत्वरमुत्थाय, 'राजपुत्रि, महानयमुपस्थितः कालातिपातः। भगवांश्च भुवनत्रयचूडामणिरस्तमयमुपगच्छति दिवसकरः। तद्गच्छामि। सर्वथाभिमतसुहृत्प्राणरक्षादक्षिणार्थमयमुपरचितोऽञ्जलिः। एष मे परमो विभवः' इत्यभिधाय, प्रतिवचनकालमप्रतीक्ष्यैव, पुरोयायिनाम्बायाः परिजनेन सर्वतः संरुद्धे द्वारदेशे कथमप्यवाप्तनिर्गमः प्रययौ। अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत्। तया तु तत्रागत्य किं कृतम्, किमभिहितम्, किमाचेष्टितम्, इति शून्यहृदया सर्वं नालक्षयम्॥

गतायां च तस्याम्, अस्तमुपगते भगवति सवितरि, तिमिरेणावष्टभ्यमाने जीवलोके, किंकर्तव्यतामूढा तामेव तरलिकामपृच्छम्—"अयि तरलिके, कथं न पश्यसि—दृढमाकुलं मे

हृदयम् । अप्रतिपत्तिविह्वलानि चेन्द्रियाणि । न स्वयमण्वपि कर्तव्यमलमस्मि ज्ञातुम् । उपदिशतु मे भवती, यदत्र सांप्रतम् । अयमेवं त्वत्समक्षमेवाभिधाय गतः कपिञ्जलः । यदि तावदितरकन्यकेव विहाय लज्जाम्, उत्सृज्य धैर्यम्, अवमुच्य विनयम्, अचिन्तयित्वा जनापवादम्, अतिक्रम्य सदाचारम्, उल्लङ्घ्य शीलम्, अवगणय्य कुलम्, अङ्गीकृत्यायशः, रागान्धवृत्तिः, अननुज्ञाता पित्रा, अननुमोदिता मात्रा, स्वयमुपगम्य ग्राहयामि पाणिम् । एवं गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गीकरोमि, एवमपि प्रथमं तावत्—स्वयमागतस्य प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य प्रणयप्रसरभङ्गः । पुनरपरम्—यदि कदाचित्तस्य जनस्य मत्कृताशाभङ्गात्प्राणविपत्तिरुपजायते, तदपि मुनिजनवधजनितं महदेनो भवेत्" इत्येवमुच्चारयन्त्यामेव मयि, आसन्नचन्द्रोदयजन्मना विरलविरलेनालोकेन धूसरतां वासवी दिगयासीत् ॥

ततः शशिकेसरिकरविदार्यमाणतमःकरिकुम्भसंभवेन मुक्ताफलक्षोदेनेव धवलतामुपनीयमानं पश्चिमेतरदिन्दुधाम्ना दिगन्तरमदृश्यत । शनैः शनैश्चन्द्रदर्शनान्मन्दमन्दस्मितायाः दशनप्रभेव ज्योत्स्ना निष्पतन्ती निशाया मुखशोभामकरोत् । तदनु रसातलादवनीमवदार्योद्गच्छता शेषफणामण्डलेनेव रजनिकरबिम्बेनाराजत रजनी ॥

अथ तं प्रत्यासन्नसमुद्रविद्रुमप्रभापाटलितमिवाभिनवोदयरागलोहितं रजनिकरमुदितं विलोकयन्तीम्, अन्धकारितहृदयाम्,

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri



तरलिकोत्सङ्गविधृतशरीराम्, मूर्च्छा मां निमीलितलोचनाम-कार्षीत् । अचिरेण च संभ्रान्ततरलिकोपनीताभिश्चन्दनचर्चाभि-स्तालवृन्तानिलैश्चोपलब्धसंज्ञा, तामेवाकुलाकुलां रुदतीं तरलि-कामपश्यम् । उन्मीलितलोचनां च मां सा कृतपादप्रणामा बद्धा-ञ्जलिरवादीत्—'भर्तृदारिके, किं लज्जया गुरुजनापेक्षया वा । प्रसीद । प्रेषय माम् । आनयामि ते हृदयदयितं जनम् । उत्तिष्ठ, स्वयं वा तत्र गम्यताम्' इत्येवंवादिनीं ताम् 'उत्तिष्ठ, यथाकथंचि-दनुद्गतजीविता संभावयामि हृदयदयितं जनम्' इत्यभिदधाना कथंचिदवलम्ब्य तामेवोदतिष्ठम् । उच्चलितायाश्च मे दुर्निमित्त-निवेदकमस्पन्दत दक्षिणं लोचनम् । उपजातशङ्का चाचिन्तयम्— 'इदमपरं किमप्युपक्षिप्तं दैवेन' इति ॥

अथ नातिदूरोद्गतेन चन्दनरसनिर्झरनिकरानिव क्षरता अमृतसागरपूरानिवोद्गिरता चन्द्रमण्डलेन प्लाव्यमाने ज्योत्स्नया भुवनान्तराले, महावराहदंष्ट्रामण्डलनिभेन शशिना क्षीरसागरो-दरादिवोद्ध्रियमाणे महीमण्डले, चन्द्रोदयानन्दनिर्भरे विलासमय इव प्रीतिमय इव जीवलोके, प्रदोषसमये, गृहीतविविधकुसुम-ताम्बूलाङ्गरागपटवासचूर्णया तरलिकयानुगम्यमाना, रक्तांशुकेन कृतशिरोवगुण्ठना, केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा, तस्मात्प्रासादशिखरादवातरम् ॥

अवतीर्य च प्रमदवनपक्षद्वारेण निर्गत्य तत्कालोचितैरा-लापैस्तया सह तमुद्देशमभ्युपागमम् । तत्र च मार्गलताकुसुमरजो-धूसरं चरणयुगलं कैलासतटाच्चन्द्रोदयप्रस्रुतचन्द्रकान्तमणिप्रस्रवणे

प्रक्षालयन्ती, यस्मिन्प्रदेशे स आस्ते, तस्मिन्नेव चास्य सरसः पश्चिमे तटे, पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशङ्का, तेन सुतरामवदीर्णहृदयेव, किमप्यनिष्टमन्तः कथयतेव विषण्णेनान्तरात्मना 'तरलिके, किमिदम्' इति सभयमभिदधाना वेपमानगात्रयष्टिः, तदभिमुखमतित्वरितमगच्छम् ॥

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादम् "हा हतोऽस्मि । हा दग्धोऽस्मि । हा वञ्चितोऽस्मि । हा किमिदमापतितम् । उत्सन्नोऽस्मि । दुरात्मन् मदनपिशाच पाप निर्घृण, किमिदमकृत्यमनुष्ठितम् । आः पापे दुष्कृतकारिणि दुर्विनीते महाश्वेते, किमनेन तेऽपकृतम् । आः पाप दुश्चरित चन्द्रचाण्डाल, कृतार्थोऽसीदानीम् । अपगतदाक्षिण्य दक्षिणानिलहतक, पूर्णास्ते मनोरथाः; कृतं कर्तव्यम्; वहेदानीं यथेष्टम् । हा भगवन् श्वेतकेतो पुत्रवत्सल, न वेत्सि मुषितमात्मानम् । हा धर्म, निष्परिग्रहोऽसि । हा तपः, निराश्रयमसि । हा सरस्वति, विधवासि । हा सत्य, अनाथमसि । हा सुरलोक, शून्योऽसि । सखे, प्रतिपालय माम् । अहमपि भवन्तमनुयास्यामि । न शक्नोमि भवता विना क्षणमप्यवस्थातुमेकाकी । कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपदे उत्सृज्य प्रयासि । कुतस्तवेयमतिनिष्ठुरता । कथय त्वत् ऋते क्व गच्छामि । कं याचे । कं शरणमुपैमि । अन्धोऽस्मि संवृत्तः । शून्या मे दिशो जाताः । निरर्थकं जीवितम् । अप्रयोजनं तपः । निःसुखाश्च लोकाः । केन सह

परिभ्रमामि । कमालपामि । उत्तिष्ठ, देहि मे प्रतिवचनम् । क तन्ममोपरि सुहृत्प्रेम ! क सा स्मितपूर्वाभिभाषिता ?" इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम् ॥

तच्च श्रुत्वा, पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा, सरस्तीरलतासक्तित्रुट्यमानांशुकोत्तरीया, यथाशक्ति त्वरितैरज्ञातसमविषमभूमिभागविन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे, केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा, सरस्तीरसमीपवर्तिनि शशिमणिशिलातले विरचितं मृणालमयं शयनमधिशयानम्, अतिनिस्पन्दतया मत्पदशब्दमिवाकर्णयन्तम्, मनःक्षोभप्रायश्चित्तप्राणायामावस्थितमिव, 'मत्तः प्रियतरस्तवापरो जनो जातः' इति कुपितेनेव जीवितेन परित्यक्तम्, 'कठिनहृदये, दर्शनमात्रकेणापि न पुनरनुगृहीतोऽयमनुगतो जनः' इति सप्रणयं मामुपालभमानमिव चक्षुषा, किंचिद्विवृताधरतया जीवितमपहर्तुमन्तःप्रविष्टैरिवेन्दुकिरणैर्निर्गच्छद्भिर्दशनांशुभिर्धवलितपुरोभागम्, मन्मथव्यथाविघटमानहृदयनिहितेन वामेन पाणिना 'प्रसीद, प्राणैः समं प्राणसमे, न गन्तव्यम्' इति हृदयस्थितां मामिव धारयन्तम्, अन्तिकस्थितेन चाचिरोद्गतजीवितमार्गमिवोद्ग्रीवेण विलोकयता तपःसुहृदा कमण्डलुना समुपेतम्, कपिञ्जलेन मद्दर्शनात् 'अब्रह्मण्यम्' इत्यूर्ध्वहस्तेन द्विगुणीभूतबाष्पोद्गमेनाक्रोशता कण्ठे परिष्वक्तम्, तत्क्षणविगतजीवितं तमहं पापकारिणी मन्दभाग्या महाभागमद्राक्षम् ॥

उद्भूतमूर्च्छान्धकारा च पातालतलमिवावतीर्णा, तदा

'काहमगमम्, किमकरवम्, किं व्यलपम्' इति सर्वमेव नाज्ञासिषम्। असवश्च मे तस्मिन्क्षणे किमतिकठिनतयास्य मूढहृदयस्य, किमनेकदुःखसहस्रसहिष्णुतया हतशरीरकस्य, किं विहिततया दीर्घशोकस्य, किं भाजनतया जन्मान्तरोपात्तस्य दुष्कृतस्य, किं दुःखदाननिपुणतया दग्धदैवस्य, किमेकान्तवामतया दुरात्मनो मन्मथहतकस्य, केन हेतुना, नोद्गच्छन्ति स्म; तदपि न ज्ञातवती। केवलमतिचिराल्लब्धचेतना दुःखभागिनी, वह्नाविव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम् । अश्रद्दधाना चासंभावनीयं तत्तस्य मरणम् आत्मनश्च जीवितम्, उत्थाय 'हा हा किमिदमुपनतम्' इति मुक्तार्तनादा, 'हा अम्ब, हा तात, हा सख्यः' इति व्याहरन्ती, "हा नाथ जीवितनिबन्धन, आचक्ष्व—क्व मामेकाकिनीमशरणाम् अकरुण, विमुच्य यासि । पृच्छ तरलिकां त्वत्कृते मया यानुभूतावस्था । युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः । प्रसीद । सकृदप्यालप । दर्शय भक्तवत्सलताम् । ईषदपि विलोकय । पूरय मे मनोरथम् । आर्तास्मि । भक्तास्मि । अनुरक्तास्मि । अनाथास्मि । बालास्मि । अगतिकास्मि । दुःखितास्मि । अनन्यशरणास्मि । मदनपरिभूतास्मि । किमिति न करोषि दयाम् । कथय, किमपराद्धम् । किं वा नानुष्ठितं मया। कस्यां वा नाज्ञायामादृतम् । कस्मिन्वा त्वदनुकूले नाभिरतम् । येन कुपितो दासजनमकारणात्परित्यज्य व्रजन्न बिभेषि कौलीनात् । अलीकानुरागप्रतारणकुशलया किं वा मया वामया पापया, याहमद्यापि प्राणिमि । हा, हतास्मि मन्दभागिनी ।

कथं न त्वं जातः, न विनयः, न बन्धुवर्गः, न परलोकः। धिङ्मां दुष्कृतकारिणीम्, यस्याः कृते तवेयमीदृशी दशा वर्तते। नास्ति मत्सदृशी नृशंसहृदया, याहमेवंविधं भवन्तमुत्सृज्य गृहं गतवती। किं मे गृहेण, किमम्बया, किं वा तातेन, किं बन्धुभिः, किं परिजनेन। हा, कमुपयामि शरणम्। अयि दैव, दर्शय दयाम्। विज्ञापयामि त्वाम्। देहि दयितदक्षिणाम्। भगवति भवितव्यते, कुरु कृपाम्। पाहि वनितामनाथाम्। भगवत्यो वनदेवताः, प्रसीदत, प्रयच्छतास्य प्राणान्। अव वसुंधरे। सकललोकानुग्रहजननि रजनि, किमर्थं नानुकम्पसे। तात कैलास, शरणागतास्मि ते। दर्शय दयालुताम्" इत्येतानि चान्यानि च व्याक्रोशन्ती, कियद्वा स्मरामि, ग्रहगृहीतेवोन्मत्तेव व्यलपम्॥

उपर्युपरि पतितनयनजलधारानिकरच्छलेन विलीयमानेव, तज्जीवितायेवात्ममरणाय स्पृहयन्ती, करतलेन कपोलयोर्ललाटे अंसयोर्हृदये च परामृशन्ती, 'पुण्डरीक, निष्ठुरोऽसि। एवमप्यार्तां न गणयसि माम्' इत्युपालभमाना, मुहुर्मुहुरेनमन्वनयम्। मुहुर्मुहुः कण्ठे गृहीत्वा व्याक्रोशम्। 'अयि भगवन्, प्रसीद, प्रत्युज्जीवयैनम्' इति मुहुर्मुहुः कपिञ्जलस्य पादयोरपतम्। मुहुर्मुहुश्च तरलिकां कण्ठे गृहीत्वा प्रारुदम्" इत्येवमात्मवृत्तान्तमावेदयन्त्या एव तस्याः समतिक्रान्तं कथमप्यतिकष्टमवस्थान्तरमनुभवन्त्या इव चेतनां जहार मूर्च्छा। वेगान्निपतन्तीं च शिलातले तां ससंभ्रमं प्रसारितकरः परिजन इव जातपीडश्चन्द्रापीडो विधृतवान्। अश्रुजलार्द्रेण च तदीयेनैवोत्तरीयवल्कलप्रान्तेन शनैः

शनैर्वीजयन्, संज्ञां ग्राहितवान् । उपजातकारुण्यश्च बाष्पसलिलोत्पीडेन प्रक्षाल्यमानकपोलयुगलो लब्धचेतनामवादीत्—"भगवति, मया पापेन तवायं पुनरभिनवतामुपनीतः शोकः, येनेदृशीं दशामुपनीतासि । तदलमनया कथया । संह्रियतामियम् । अहमप्यसमर्थः श्रोतुम् । अतिक्रान्तान्यपि हि संकीर्त्यमानानि प्रियजनविश्वासवचनान्यनुभवसमां वेदनामुपजनयन्ति सुहृज्जनस्य दुःखानि । तन्नार्हसि कथं कथमपि विधृतानिमानसुलभानसून्पुनः पुनः स्मरणशोकानलेन्धनतामुपनेतुम्" इति ॥

एवमुक्त्वा दीर्घमुष्णं च निःश्वस्य, बाष्पायमाणलोचना सनिर्वेदमवादीत्—"राजपुत्र, या तदा तस्यामतिदारुणायां हतनिशायामेभिरतिनृशंसैरसुभिर्न परित्यक्ता, ते मामिदानीं परित्यजन्तीति दूरापेतम् । नूनमपुण्योपहतायाः पापाया मम भगवानन्तकोऽपि परिहरति दर्शनम् । कुतश्च मे कठिनहृदयायाः शोकः । सर्वमिदमलीकमस्य दुरात्मनः शठहृदयस्य । सर्वथाहमनेन त्यक्तत्रपेण निरपत्रपाणामग्रेसरी कृता । यया वज्रमय्येवेदमनुभूतम्, तस्याः का गणना कथनं प्रति । किं वा परमतः कष्टतरमाख्येयमन्यद्भविष्यति, यन्न शक्यते श्रोतुमाख्यातुं वा । केवलमस्य वज्रपातस्यानन्तरमाश्चर्यं यदभूत्, तदावेदयामि । आत्मनश्च प्राणधारणकारणलव इवाव्यक्तो यः समुत्पन्नः, तं च कथयामि; यया दुराशामृगतृष्णिकया गृहीताहमिदमुपरतकल्पं परकीयमिव भारभूतमप्रयोजनमकृतज्ञं च हतशरीरं वहामि । तदलं श्रूयताम् । ततश्च तथाभूते तस्मिन्नवस्थान्तरे, मरणैकनिश्चया तत्तद्बहु विलप्य

तरलिकामब्रवम्—'अयि उत्तिष्ठ, निष्ठुरहृदये, कियद्रोदिषि। काष्ठान्याहृत्य विरचय चिताम्। अनुसरामि जीवितेश्वरम्' इति॥

अत्रान्तरे, झटिति चन्द्रमण्डलाविनिर्गतो गगनादवतीर्य, धवलदुकूलपल्लवकल्पितोष्णीषग्रन्थिः, कुमुदधवलदेहः, महाप्रमाणः पुरुषो महापुरुषलक्षणोपेतो दिव्याकृतिः, बाहुभ्यां मृणालधवलाङ्गुलिभ्यामतिशीतलस्पर्शाभ्यां तमुपरतमुत्क्षिपन्, दुन्दुभिनादगम्भीरेण स्वरेण 'वत्से महाश्वेते, न परित्याज्यास्त्वया प्राणाः। पुनरपि तवानेन सह भविष्यति समागमः' इत्येवमाहृतः पितेवाभिधाय, सहैवानेन गगनतलमुदपतत्। अहं तु तेन व्यतिकरेण सभया सविस्मया सकौतुका चोन्मुखी 'किमिदम्' इति कपिञ्जलमपृच्छम्। असौ तु ससंभ्रममदत्त्वैवोत्तरमुदतिष्ठत्। 'दुरात्मन्, क्व मे वयस्यमपहृत्य गच्छसि' इत्यभिधाय, उन्मुखः संजातकोपो बध्नन् सवेगमुत्तरीयवल्कलेन परिकरम्, उत्पतन्तं तमेवानुसरन्नन्तरिक्षमुदगात्। पश्यन्त्या एव च मे सर्व एव ते तारागणमध्यमविशन्॥

मम तु तेन द्वितीयेनेव प्रियतममरणेन कपिञ्जलगमनेन द्विगुणीकृतशोकायाः, सुतरामदीर्यत हृदयम्। किंकर्तव्यतामूढा च तरलिकामब्रवम्—'अयि, न जानासि?—किमेतत्' इति। सा तु तदवलोक्य, स्त्रीस्वभावकातरा, तस्मिन्क्षणे शोकाभिभाविना भयेनाभिभूता, वेपमानाङ्गयष्टिः, मम मरणशङ्कया च वराकी विषण्णहृदया सकरुणमवादीत्—"भर्तृदारिके, न जानामि पापकारिणी। किं तु महदिदमाश्चर्यम्। अमानुषाकृति-

रेष पुरुषः । समाश्वासिता चानेन गच्छता सानुकम्पं पित्रेव भर्तृदारिका । प्रायेण चैवंविधा दिव्याः स्वप्नेऽप्यविसंवादिन्यो भवन्त्याकृतयः । किमुत साक्षात् । न चाल्पमपि विचारयन्ती कारणमस्य मिथ्याभिधाने पश्यामि । अतो युक्तं विचार्यात्मान-मस्मात्प्राणपरित्यागव्यवसायान्निवर्तयितुम् । अतिमहत्खल्विदमा-श्वासस्थानमस्यामवस्थायाम् । अपि च तमनुसरन्गत एव कपिञ्जलः । तस्माच्च 'कुतोऽयम् ? को वायम् ? किमर्थं वानेनायमपगतासु-रुत्क्षिप्य नीतः ? क्व वा नीतः ? कस्माच्चासंभावनीयेनामुना पुनः समागमाशाप्रदानेन भर्तृदारिका समाश्वासिता ?' इति सर्वमुप-लभ्य, जीवितं वा मरणं वा समाचरिष्यसि । अदुर्लभं हि मरण-मध्यवसितम् । पश्चादप्येतद्भविष्यति । न च जीवन्कपिञ्जलो भर्तृदारिकामदृष्ट्वा स्थास्यति । तेन तत्प्रत्यागमनकालावधयोऽपि तावद्ध्रियन्ताममी प्राणाः" इत्यभिदधाना पादयोर्मे न्यपतत् । अहं तु सकललोकदुर्लङ्घतया जीविततृष्णायाः, क्षुद्रतया च स्त्रीस्वभा-वस्य, तया च तद्वचनोपनीतया दुराशामृगतृष्णिकया, कपिञ्जल-प्रत्यागमनकाङ्क्षया च, तस्मिन्काले तदेव युक्तं मन्यमाना, नोत्सृष्ट-वती जीवितम् । आशया हि किमिव न क्रियते । तां च पाप-कारिणीं कालरात्रिप्रतिमां वर्षसहस्रायमाणां नरकमयीमिवाग्नि-मयीमिव उत्सन्ननिद्रा, तथैव क्षितितले विचेष्टमाना, तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती ॥

प्रत्युषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा, कृतनिश्चया, तत्प्रीत्या तमेव कमण्डलुमादाय, तान्येव च वल्कलानि तामेव

चाक्षमालां गृहीत्वा, बुद्ध्वा निःसारतां संसारस्य, दृष्ट्वा च निष्ठुरतां दैवस्य, चिन्तयित्वा चातिबहुलदुःखतां स्नेहस्य, अवधार्य चाकाण्डभङ्गुरतां सर्वसुखानाम्, अविगणय्य तातमम्बां च, परित्यज्य सह परिजनेन सकलबन्धुवर्गम्, निवर्त्य विषयसुखेभ्यो मनः, संयम्येन्द्रियाणि, गृहीतब्रह्मचर्या, तस्य जनस्याश्रुमोक्षमात्रेण किल कृतज्ञतां दर्शयन्ती, तदनुरागकृशमिदमपुण्यबहुलमस्तमितलज्जमङ्गलभूतमनेकक्लेशायाससहस्रानिवासं दग्धशरीरकं बहुविधैर्नियमशतैः शोषयन्ती, वन्यैश्च फलमूलवारिभिर्वर्तमाना, त्रिसंध्यमत्र सरसि स्नानमुपस्पृशन्ती शरणार्थिनी प्रतिदिनमर्चयन्ती देवमनाथशरणं त्र्यम्बकम्, अस्यामेव गुहायां तरलिकया सह दीर्घशोकमनुभवन्ती चिरमवसम्। साहमेवंविधा पापकारिणी, निर्लक्षणा, निर्लज्जा, निःस्नेहा च, नृशंसा च, गर्हणीया, निष्प्रयोजनोत्पन्ना, निष्फलजीविता, निरवलम्बना, निःसुखा च। किं मया दृष्टया पृष्टया वा कृतब्राह्मणवधमहापातकया करोति महाभागः" इत्युक्त्वा पाण्डुना वल्कलोपान्तेन शशिनमिव शरन्मेघशकलेनाच्छाद्य वदनम्, दुर्निवारबाष्पवेगमपारयन्ती निवारयितुम्, उन्मुक्तकण्ठमतिचिरमुच्चैः प्रारोदीत्॥

चन्द्रापीडस्तु प्रथममेव तस्या रूपेण, विनयेन, दाक्षिण्येन, मधुरालापतया, निःसङ्गतया च, अतितपस्वितया च, शुचितया च, उपारूढगौरवोऽभूत्। तदानीं तु तेनापरेण दर्शितसद्भावेन स्ववृत्तान्तकथनेन तया च कृतज्ञतया हृतहृदयः सुतरामारोपितप्रीतिरभवत्। आर्द्रीकृतहृदयश्च शनैःशनैरेनामभाषत—"भगवति,

क्लेशभीरुरकृतज्ञः सुखासङ्गलुब्धो लोकः, स्नेहसदृशं कर्मानुष्ठातुमशक्तः, निष्फलेनाश्रुपातमात्रेण स्नेहमुपदर्शयन् रोदिति । त्वया तु कर्मणैव सर्वमाचरन्त्या किमिव न प्रेमोचितमाचेष्टितम्, येन रोदिषि । तदर्थं च जन्मनः प्रभृति समुपचितपरिचयः प्रेयानसंस्तुत इव परित्यक्तो बान्धवजनः । संनिहिता अपि तृणावज्ञयावधीरिता विषयाः । मुक्तान्यतिशयितशुनासीरसमृद्धीन्यैश्वर्यसुखानि । मृणालिनीवातितनीयस्यपि नितरां तनिमानमनुचितैः संक्लेशैरुपनीता तनुः । गृहीतं ब्रह्मचर्यम् । आयोजितस्तपसि महत्यात्मा । वनिताजनदुष्करमप्यङ्गीकृतमरण्यावस्थानम् । अपि चानायासेनैवात्मा दुःखाभिहतैः परित्यज्यते । महीयसा तु यत्नेन गरीयसि क्लेशे निक्षिप्यते केवलम् । यदेतदनुमरणं नाम, तदतिनिष्फलम् । अविद्वज्जनाचरित एष मार्गः । मोहविलसितमेतत् । अज्ञानपद्धतिरियम् । रभसाचरितमिदम् । क्षुद्रदृष्टिरेषा । मौर्ख्यस्खलितमिदम्, यदुपरते पितरि भ्रातरि सुहृदि भर्तरि वा प्राणाः परित्यज्यन्ते । स्वयं चेन्न जहति, न परित्याज्याः । अत्र हि विचार्यमाणे स्वार्थ एव प्राणपरित्यागोऽयमसह्यशोकवेदनाप्रतीकारत्वादात्मनः । उपरतस्य तु न कमपि गुणमावहति । न तावत्तस्यायं प्रत्युज्जीवनोपायः । न धर्मोपचयकारणम् । न शुभलोकोपार्जनहेतुः । न निरयपातप्रतीकारः । न दर्शनोपायः । न परस्परसमागमनिमित्तम् । अन्यामेव स्वकर्मफलपरिपाकोपचितामसाववशो नीयते कर्मभूमिम् । असावप्यात्मघातिनः केवलमेनसा संयुज्यते । जीवंस्तु जलाञ्जलिदानादिना बहूपकरोत्युपरतस्यात्म-

नश्च । मृतस्तु नोभयस्यापि । स्मर तावत्—प्रियामेकपत्नीं रतिं भर्तरि मकरकेतौ सकलाबलाजनहृदयहारिणि हरनयनहुताशनदग्धेऽप्यविरहितामसुभिः, उत्तरां च विराटदुहितरं बालां बालशशिनीव नयनानन्दहेतौ विनयवति विक्रान्ते च पञ्चत्वमभिमन्यावुपगतेऽपि धृतदेहाम् ॥

प्रोन्मुच्येतापि जीवितम्, संदिग्धोऽप्यस्य समागमो यदि स्यात् । भगवत्या तु ततः पुनः स्वयमेव समागमसरस्वती समाकर्णिता । अनुभवे च को विकल्पः । कथं च तादृशानामप्राकृताकृतीनां महात्मनामवितथगिरां गरीयसापि कारणेन गिरि वैतथ्यमास्पदं कुर्यात् । उपरतेन च सह जीवन्त्याः कीदृशी समागतिः । अतो निःसंशयमसावुपजातकारुण्यो महात्मा पुनः प्रत्युज्जीवनार्थमेवैनमुत्क्षिप्य सुरलोकं नीतवान् । अचिन्त्यो हि महात्मनां प्रभावः । बहुप्रकाराश्च संसारवृत्तयः । चित्रं च दैवम् । आश्चर्यातिशययुक्ताश्च तपःसिद्धयः । अनेकविधाश्च कर्मणां शक्तयः । अपि च सुनिपुणमपि विमृशद्भिः किमिवान्यत्तदपहरणे कारणमाशङ्क्यते जीवितप्रदानात् ऋते । न चासंभाव्यमिदमवगन्तव्यं भगवत्या । चिरप्रवृत्त एष पन्थाः । तथा हि—अर्जुनमश्वमेधतुरगानुसारिणम् आत्मजेन बभ्रुवाहननाम्ना समरशिरसि शरापहृतप्राणम्, उलूपी नाम नागकन्यका सोच्छ्वासमकरोत् । अभिमन्युतनयं च परीक्षितमश्वत्थामास्त्रपावकपरिप्लुष्टम् उदरादुपरतमेव निर्गतम्, उत्तराप्रलापोपजनितकृपो भगवान्वासुदेवो दुर्लभानसून्प्रापितवान् । अत्रापि कथंचिदेवमेव भविष्यति । तथापि

किं क्रियते । क उपालभ्यते । प्रभवति हि भगवान्विधिः । बलवती च नियतिः । आत्मेच्छया न शक्यमुच्छ्वसितुमपि । अतिपिशुनानि चास्यैकान्तनिष्ठुरस्य दैवहतकस्य विलसितानि न क्षमन्ते दीर्घकालमव्याजरमणीयं प्रेम । प्रायेण च निसर्गत एवानायतस्वभावभङ्गुराणि सुखानि । आयतस्वभावानि च दुःखानि । तथा हि—कथमप्येकस्मिञ्जन्मनि समागमः, जन्मान्तरसहस्राणि च विरहः प्राणिनाम् । अतो नार्हस्यनिन्द्यमात्मानं निन्दितुम् । आपतन्ति हि संसारपथमतिगहनमवतीर्णानामेते वृत्तान्ताः । धीरा हि तरन्त्यापदम्" इत्येवंविधैरन्यैश्च मृदुभिरुपसान्त्वनैः संस्थाप्य ताम्, पुनरपि निर्झरजलेनाञ्जलिपुटोपनीतेन अनिच्छन्तीमपि बलात्प्रक्षालितमुखीमकारयत् ॥

अत्रान्तरे च श्रुतमहाश्वेतावृत्तान्तोपजातशोक इव समुत्सृष्टदिवसव्यापारो रविरपि भगवानधोमुखतामयासीत् । अथ क्षीणे दिवसे, महाश्वेता मन्दं मन्दमुत्थाय, भगवतीमुपास्य पश्चिमां संध्याम्, कमण्डलुजलेन प्रक्षालितचरणा, वल्कलशयनीये सखेदमुष्णं च निःश्वस्य निषसाद । चन्द्रापीडोऽप्युत्थाय कृतसंध्याप्रणामः, तस्मिन्द्वितीये शिलातले मृदुभिर्लतापल्लवैः शय्यामकल्पयत् । उपविष्टश्च तस्याम्, पुनःपुनस्तमेव मनसा महाश्वेतावृत्तान्तमभावयत् । पुनः पप्रच्छ चैनाम्—'भगवति, सा तव परिचारिका वनवासव्यसनमित्रं दुःखसब्रह्मचारिणी तरलिका क गता' इति ॥

अथ साकथयत्—"महाभाग, यत्तन्मया कथितममृतसंभवमप्सरसां कुलम्, तस्मान्मदिरेति नाम्ना मदिरायतेक्षणा

कन्यकाभूत्। तस्याश्चासौ देवश्चित्ररथः पाणिमग्रहीत्। तयोश्च दुहितृरत्नमुदपादि कादम्बरीति नाम्ना। सा च मे जन्मनः प्रभृति एकासनशयनपानाशना परं प्रेमस्थानमखिलविस्रम्भधाम द्वितीयमिव हृदयं बालमित्रम्। एकत्र तया मया च नृत्यगीतादिकलासु कृताः परिचयाः। शिशुजनोचिताभिश्च क्रीडाभिरनियन्त्रणनिर्भरमपनीतो बालभावः। सा चामुनैव मदीयेन हतवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्—'नाहं कथंचिदपि सशोकायां महाश्वेतायाम्, आत्मनः पाणिं ग्राहयिष्यामि' इति। सखीजनस्य पुरतः सशपथमभिहितवती च—'यदि कथमपि मामनिच्छन्तीमपि बलात्तातः कदाचित्कस्मैचिद्दातुमिच्छति, तदाहमनशनेन वा हुताशनेन वा रज्ज्वा वा विषेण वा नियतमात्मानमुत्स्रक्ष्यामि' इति। सर्वं च तदात्मदुहितुर्निश्चलभाषितं कर्णपरंपरया गन्धर्वराजश्चित्ररथः स्वयमश्रृणोत्। गच्छति च काले, समुपारूढनिर्भरयौवनामालोक्य स ताम्, बलवदुपतापपरवशः क्षणमपि न धृतिमवालम्बत। एकापत्यतया च अतिप्रियतया च न शक्तः किंचिदपि तामभिधातुम्, अपश्यंश्चान्यदुपायान्तरम्, 'इदमत्र प्राप्तकालम्' इति मत्वा, तया महादेव्या मदिरया सहावधार्य, क्षीरोदनामानं कञ्चुकिनम् 'वत्से महाश्वेते, त्वद्व्यतिरेकेणैव दग्धहृदयानामिदमपरमस्माकमुपस्थितम्। इदानीं तु कादम्बरीमनुनेतुं त्वं शरणम्' इति संदिश्य मत्समीपमद्यैव प्रत्युषसि प्रेषितवान्। ततो मया गुरुवचनगौरवेण सखीप्रेम्णा च क्षीरोदेन सार्धं सा तरलिका 'सखि कादम्बरि, किं दुःखितमपि जनम-

तितरां दुःखयसि । जीवन्तीमिच्छसि चेन्माम्, तत्कुरु गुरुवचनमवितथम्' इति संदिश्य विसर्जिता । नातिचिरं गतायां च तस्याम्, अनन्तरमेवेमां भूमिमनुप्राप्तो महाभागः" इत्यभिधाय तूष्णीमभवत् ॥

अत्रान्तरे लाञ्छनच्छलेन विडम्बयन्निव शोकानलदग्धमध्यं महाश्वेताहृदयम्, उद्वहन्निव कुमारवधमहापातकम्, उदगात्तारकाराजः । क्रमेण चोद्गते शशाङ्कमण्डले, चन्द्रापीडः सुप्तामालोक्य महाश्वेताम्, पल्लवशयने शनैः शनै समुपाविशत् । 'अस्यां वेलायां किं नु खलु मामन्तरेण चिन्तयति वैशम्पायनः, किं वा वराकी पत्रलेखा, किं वा राजपुत्रलोकः' इति चिन्तयन्नेव निद्रां ययौ ॥

अथ क्षीणायां क्षपायाम्, उषसि संध्यामुपास्य शिलातलोपविष्टायां पवित्राण्यघमर्षणानि जपन्त्यां महाश्वेतायाम्, निर्वर्तितप्राभातिकविधौ चन्द्रापीडे, तरलिका षोडशवर्षवयसा सावष्टम्भाकृतिना गन्धर्वदारकेण केयूरकनाम्नानुगम्यमाना प्रत्युषस्येव प्रादुरासीत् । आगत्य च 'कोऽयम्' इत्युपजातकुतूहला चन्द्रापीडं सुचिरमालोक्य, महाश्वेतायाः समीपमुपसृत्य, कृतप्रणामा सविनयमुपाविशत् । अनन्तरं चातिदूराननतेनोत्तमाङ्गेन प्रणम्य, केयूरकोऽपि महाश्वेतादृष्टिनिसृष्टं नातिसमीपवर्ति शिलातलं भेजे । समुपविष्टश्च तत्र तमदृष्टपूर्वं रूपातिशयं चन्द्रापीडस्य दृष्ट्वा विस्मयमापेदे ॥

परिसमाप्तजपा तु महाश्वेता पप्रच्छ तरलिकाम्—'किं

त्वया दृष्टा प्रियसखी कादम्बरी कुशलिनी । करिष्यति वा तदस्मद्वचनम्' इति । अथ सा तरलिका विनयावनतमौलिः, ईषदालम्बितकर्णपाशम् अतिमधुरया गिरा व्यजिज्ञपत्—"भर्तृदारिके, दृष्टा खलु मया भर्तृदारिका कादम्बरी । सर्वतः कुशलिनी । विज्ञापिता च निखिलं भर्तृदुहितुः संदेशम् । आकर्ण्य च यत्तया संततमुक्तस्थूलाश्रुबिन्दुवर्षं रुदित्वा प्रतिसंदिष्टम्, तदेष तयैव विसर्जितः, तस्या एव वीणावाहकः केयूरकः कथयिष्यति" इत्युक्त्वा विरराम । विरतवचसि तस्यां केयूरकोऽब्रवीत्—"भर्तृदारिके महाश्वेते, देवी कादम्बरी दृढदत्तकण्ठग्रहा त्वां विज्ञापयति—'यदियमागत्य मामवदत्तरलिका, तत्कथय, किमयं गुरुजनवचनानुरोधः, किमिदं मच्चित्तपरीक्षणम्, किं गृहनिवासापराधनिपुणोपालम्भः, किं प्रेमविच्छेदाभिलाषः, किं भक्तजनपरित्यागोपायः, किं वा प्रकोपः । जानास्येव मे सहजप्रेमनिस्यन्दनिर्भरं हृदयम् । एवमतिनिष्ठुरं संदिशन्ती कथमसि न लज्जिता । तथा मधुरभाषिणी केनासि शिक्षिता वक्तुमप्रियम् । स्वस्थोऽपि तावत्क इव सहृदयः कनीयस्यवसानविरसे कर्मणीदृशे मतिमुपसर्पयेत् । किमुतातिदुःखाभिहतहृदयोऽस्मद्विधो जनः । सुहृद्दुःखखेदिते हि मनसि कैव सुखाशा, कैव निर्वृतिः, कीदृशा भोगाः, कानि वा हसितानि । येनेदृशीं दशामुपनीता प्रियसखी, कथमतिदारुणं तमहं विषमिवाप्रियकारिणं कामं सकामं कुर्याम् । दिवसकरास्तमयविधुरासु नलिनीषु सहवासपरिचयाच्चक्रवाकयुवतिरपि पतिसमागमसुखानि

परित्यजति । किमुत नार्यः । अपि च, यत्र भर्तृविरहविधुरा परिहृतपरपुरुषदर्शना दिवानिशं निवसति प्रियसखी, कथमिव तन्मम हृदयमपरः प्रविशेज्जनः । यत्र च भर्तृविरहविधुरा तीव्रव्रतकर्शिताङ्गी प्रियसखी महत्कृच्छ्रमनुभवति, तत्राहमवगणय्यैतत्, कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि । कथं वा मम सुखं भविष्यति । त्वत्प्रेम्णा चास्मिन्वस्तुनि मया कुमारिकाजनविरुद्धं स्वातन्त्र्यमालम्ब्य अङ्गीकृतमयशः, समवधीरितो विनयः, गुरुवचनमतिक्रान्तम्, न गणितो लोकापवादः, वनिताजनस्य सहजमाभरणमुत्सृष्टा लज्जा । सा, कथय, कथमिव पुनरत्र प्रवर्तते । तदयमञ्जलिरुपरचितः, प्रणामोऽयम्, इदं च पादग्रहणम् । अनुगृहाण माम् । वनमितो गतासि मे जीवितेन सह । मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि' इत्यभिधाय तूष्णीमभूत्" इति ॥

महाश्वेता तु तच्छ्रुत्वा, सुचिरं विचार्य, 'गच्छ, स्वयमेवाहमागत्य यथार्हमाचरिष्यामि' इत्युक्त्वा केयूरकं प्राहिणोत् । गते च केयूरके, चन्द्रापीडमुवाच—"राजपुत्र, रमणीयो हेमकूटः । चित्रा च चित्ररथराजधानी । बहुकुतूहलः किंपुरुषविषयः । पेशलो गन्धर्वलोकः । सरलहृदया महानुभावा च कादम्बरी । यदि नातिखेदकरमिव गमनं कलयसि, नावसीदति वा गुरु प्रयोजनम्, अदृष्टचरविषयकुतूहलि वा चेतः, मद्वचनमनुरुध्यते वा भवान्, ततो नार्हसि निष्फलां कर्तुमभ्यर्थनामिमाम् । इतो मयैव सह गत्वा हेमकूटमतिरमणीयतानिधानम्,

तत्र दृष्ट्वा च मन्निर्विशेषां कादम्बरीम्, अपनीय तस्याः कुमति-मनोमोहविलसितम्, एकमहो विश्रम्य, श्वोभूते प्रत्यागमिष्यसि। मम हि निष्कारणबान्धवं भवन्तमालोक्यैव दुःखान्धकारभाराक्रान्तेन महतः कालादुच्छ्वसितमिव चेतसा। श्रावयित्वा स्ववृत्तान्तमिमं सह्यतामिव गतः शोकः। दुःखितमपि जनं रमयन्ति सज्जनसमागमाः। परसुखोपपादनपराधीनश्च भवादृशां गुणोदयः" इत्युक्तवतीं च चन्द्रापीडः 'भगवति, दर्शनात्प्रभृति परवानयं जनः। कर्तव्येषु यथेष्टमशङ्कितया नियुज्यताम्' इत्यभिधाय तया सहैवोदचलत्॥

क्रमेण च गत्वा हेमकूटम्, आसाद्य गन्धर्वराजकुलम्, समतीत्य काञ्चनतोरणानि सप्त कक्षान्तरणि, कन्यान्तःपुरद्वारमवाप। महाश्वेतादर्शनप्रधावितेन दूरादेव कृतप्रणामेन कनकवेत्रलताहस्तेन प्रतीहारजनेनोपदिश्यमानमार्गः प्रविश्य, असंख्येयनारीशतसहस्रसंबाधम्, इयत्तां ग्रहीतुमेकत्र त्रैलोक्यस्त्रैणमिव संहतम्, अपुरुषमिव सर्गान्तरम्, अनेककल्पकल्पनार्थमुत्पाद्य स्थापितमिवाङ्गनाकोशम्, शृङ्गारमयमिव सौन्दर्यमयमिव कुतूहलमयमिव कुमारः कुमारीपुराभ्यन्तरं ददर्श॥

यत्र च कन्यकाजनस्य लोचनान्येव कर्णोत्पलानि, निःश्वासा एवाधिवासगन्धयुक्तयः, आलापा एव तन्त्रीनिनादाः, करतलान्येव लीलाकमलानि, निजदेहप्रभैवांशुकावगुण्ठनम्, कोमलाङ्गुलिराग एव चरणालक्तकरसः। यत्र चालक्तकरसोऽपि चरणातिभारः, अवतंसकुसुमधारणमपि श्रमः, सखीदर्शनेष्वकृत-

हस्तावलम्बनमुत्थानम् अतिसाहसम्, कुसुमावचयेषु द्वितीयकुसुमग्रहणमप्ययुवतिजनोचितम्, कन्यकाविज्ञानेषु माल्यग्रथनम् असुकुमारजनव्यापारः ॥

तस्य चैवंविधस्य किंचिदभ्यन्तरमतिक्रम्य, इतश्चेतश्च परिभ्रमतः कादम्बरीप्रत्यासन्नस्य परिजनस्य तांस्तानतिमनोहरानालापान् शृण्वन्नेव, कादम्बरीभवनसमीपमुपययौ ॥

पुलिनायमानम् उपवनलतागलितकुसुमरेणुपटलैः, काञ्चनद्वीपायमानं चम्पकदलोपहारैः, सेवार्थमागतेनोभयत ऊर्ध्वस्थितेन स्त्रीजनेन प्राकारेणेव लावण्यमयेन कृतदीर्घरथ्यामुखाकारं मार्गमद्राक्षीत् । तेन चान्तर्निपतितमाभरणकिरणालोकं संपिण्डितं नदीवेणिकाजलप्रवाहमिव वहन्तमपश्यत् । तन्मध्ये च प्रतिस्रोत इव गत्वा प्रतिहारीमण्डलाधिष्ठितपुरोभागं श्रीमण्डपं ददर्श ॥

तत्र च मध्यभागे, पर्यन्तरचितमण्डलोपविष्टेन अनेकसहस्रसंख्येन परिस्फुरदाभरणसमूहेन कल्पलतानिवहेनेव कन्यकाजनेन परिवृताम्, नीलांशुकप्रच्छदपटप्रावृतस्य नातिमहतः पर्यङ्कस्योपाश्रये धवलोपधानन्यस्तद्विगुणभुजलतावष्टम्भेनावस्थिताम्, निपतितप्रतिबिम्बतयाधस्तान्मणिकुट्टिमेषु नागैरिवापह्रियमाणाम्, उपान्ते च रत्नभित्तिषु दिक्पालैरिव नीयमानाम्, उपरि मणिमण्डपेष्वमरैरिवोत्क्षिप्यमाणाम्, अकृतपुण्यामिव मुञ्चन्तीं बालभावम्, पादाभरणरत्नांशुलेखासंदेहदायिनीभिरतिकोमलतया नखविवरेण वमन्तीभिरिव रुधिरधारावर्षमङ्गुलिभिरुपेताभ्यां विद्रुमरसनदीमिव चरणाभ्यां प्रवर्तयन्तीम्, प्रजापतिकरदृढनि-

ऽपीडितमध्यभागगलितं जघनशिलातलप्रतिघाताल्लावण्यजलस्रोत इव द्विधागतमूरुद्वयं दधानाम्, सर्वतः प्रसारितदीर्घमयूखमण्डलेनेर्ष्यया परपुरुषदर्शनमिव निरुन्धता काञ्चीदाम्ना नितम्बबिम्बस्य विरचितपरिवेषाम्, प्रजापतेः स्पृशतः सौकुमार्यादङ्गुलिमुद्रामिव निमग्नां नाभिमण्डलीमावर्तिनीमुद्वहन्तीम्, नखकिरणविसरवर्षिणा च माणिक्यवलयगौरवश्रमवशात्स्वेदजलधाराजालकमिव मुञ्चता करयुगलेन समुद्भासिताम्, अभिनवयौवनपवनक्षोभितस्य रागसागरस्य तरङ्गाभ्यामिवोद्गताभ्यां विद्रुमलतालोहिताभ्यामधराभ्यां रक्तावदातस्वच्छकान्तिना च मदिरारसपूर्णमाणिक्यशुक्तिसंपुटच्छविना कपोलयुगलेन रतिपरिवादिनीरत्नकोणचारुणा च नासावंशेन गतिप्रसरनिरोधिश्रवणकोपादिव किंचिदारक्तापाङ्गेन लोचनयुगलेन च विराजमानाम्, उन्मदयौवनकुञ्जरमदराजिभ्यां भ्रूलताभ्यां मनःशिलापङ्कलिखितेन च वदनलग्नेन तिलकबिन्दुना विद्योतितललाटपट्टाम्, उत्कृष्टहेमतालीपट्टाभरणमयं कर्णपाशं दोलायमानमरकतमाणिक्यकुण्डलं दधतीम्, पाटलीकृतललाटेन सीमन्तचुम्बिनश्चूडामणेः क्षरतांशुजालेन प्रक्षाल्यमानदीर्घकेशकलापाम्, रजनिजागरखिन्नस्य परिचितचक्रवाकमिथुनस्य स्वप्तुं क्रीडानदिकासु कमलधूलिवालुकाभिर्बालपुलिनानि कारयन्तीम्, आत्मसंवर्धितलताप्रथमकुसुमनिर्गमनिवेदनागतामुद्यानपालीमशेषाभरणदानेन संमानयन्तीम्, उपनीतविविधवनकुसुमफलपूर्णपत्रपुटामविज्ञायमानालापतया हासहेतुं पुनः पुनः क्रीडापर्वतपत्रशबरीमालापयन्तीम्, गौरीमिव श्वेतांशुकरचितोत्तमाङ्गाभरणाम्,

